**तस्मान्नाऽन्यप्रमितिनिबन्धने नाप्यप्रमितिनिबन्धने अनभिमतमभिमतं नास्ति, अभिमतं नास्तीति प्रवृत्तिनिवृत्ती, अपि त्वभावाऽधिगमनिबन्धने । नास्तिज्ञानस्य को विषयो निरूपितः? ननूक्तं, किमपराद्धं भवतो विषयाऽभा-**

दोष इति चेत्? अङ्गीकृतं तर्हि तदतिरिक्तं निमित्तमभावः। तथाप्युपलम्भाऽभावरूपत्वादस्य न प्रमेयाऽभावसिद्धिरिति चेत्। अत्रोत्तरमनन्तरमेव वक्ष्यति स्वयमेवाऽऽचार्यः।

नन्वभावो नाम विग्रहवान्न कश्चिदनुभूयत इत्युक्तं, तत्किमयमभावव्यवहारो नास्ति, नास्तिनिमित्तो वा? न तावन्नास्तिनिमित्तः। कादाचित्कत्वाऽनुपपत्तेः। न च निमित्तान्तरमस्याऽस्तीत्युक्तम्। न च नास्ति, भावव्यवहारस्याऽपि अपह्नवप्रसङ्गादित्युक्तम्। निःस्वभावस्य कथमनुभूयमानते? ति चेन्न। सञ्ज्ञावृत्तिरूपस्य तस्य प्रतीयमानत्वात्स्वतो ऽवान्तरविशेषाऽनुपलब्धेः। निःस्वभावतेति चेत्? न। ज्ञानशक्त्यादीनामपि तत्प्रसङ्गात्। तेषामपि हि न स्वतो भेदो निरूप्यते। ज्ञेयशक्यभेदाऽधीनं तद्भेदनिरूपणमिति चेत्? न। इहापि प्रतियोगिभेदेन तद्भेदनिरूपणादिति सर्वमवदातम्।

प्रकृतमुपसंहरति—तस्मान्नाऽन्यप्रमितिनिबन्धने नाऽप्यप्रमितिनिबन्धने ऽनभिमत नास्ति, अभिमत नास्तीति प्रवृत्तिनिवृत्ती, अपि तु पारिशेष्यादभावाऽवगमनिबन्धने। न केवलं व्यवहाराऽन्यथानुपपत्तेरभावसिद्धिः, अपि तु घटो ऽस्तीति ज्ञानवत्तदभावज्ञानमप्यवगम्यते। न च ज्ञानं निरालम्बनमिति निवेदयिष्यते। तदस्या ऽऽलम्बनं नाऽभावादन्यदस्तीत्याशयवान् पृच्छति—नास्तिज्ञानस्य को विषयो निरूपितः? अपर आह—ननूक्तं, नेदमिह प्रतीयत इत्यर्थः।

तत्र न तावददृश्ये[1] प्रतियोगिनि वस्तुसद्भावज्ञानं, प्रतियो-

१ दृश्ये त पु० पा०।

**येन ? यत्तमतिलङ्घ्य प्रमाणाऽभावो विषय इत्युच्यते । ज्ञेयाऽभावो न प्रमेयः । भवतु यद्यस्ति तद्विशेषो हेतुः । ज्ञानाऽभावे ज्ञानभ्रमो व्यवहाराऽभावे व्यवहारभ्रमः । आलोकाऽदर्शने ऽन्धकारभ्रमवत् ।**

गिनो ऽप्यप्रमितिः सम्भवतीत्युक्तम् । अतस्तद्व्यतिरिक्ताऽनुपलम्भाऽभावो वक्तव्यः । तथा च किमपराद्धमवभवतो विषयाऽभावेन ? यत्तं प्रमीयमाणमतिलङ्घ्य प्रमाणाऽभावो विषय उच्यते ।

शङ्कते—प्रातिस्विकभेदाऽनुपलब्धेर्ज्ञेयाऽभावो न प्रमेयः । निराचष्टे—भवतु यद्यस्ति ज्ञानज्ञेयाऽभावयोर्विशेषः । न हि ज्ञानाऽभावो प्याजानतो भेदवान् । तद्भेदस्याऽपि प्रतियोगिभेदाऽधीननिरूपणत्वात् । तथा च चैत्रो नास्तीति प्रतीतिस्तदभावाऽवभासलक्षणकार्यसमधिगमनीया, न कुक्कविकृतिरिव क्लेशेन कथं चित्प्रमाणाऽभावविषयतया व्याख्यातुमुचिता । अथापि वैयात्यात् उच्यते, न च तत्त्वतो नास्तीति बुद्धिव्यवहारौ स्तः, किन्तु चैत्रदर्शनाऽभावे चैत्रो नास्तीति ज्ञानं भ्रमः, चैत्रोचितव्यवहाराऽभावे च तदभावे व्यवहारभ्रमः ।

अत्रैव निदर्शनमाह—आलोकाऽदर्शने ऽन्धकारभ्रमवत् । न किलाऽन्धकारो नाम तत्त्वतो ऽस्ति, तत्प्रत्ययो वा । तथा हि तद् द्रव्यादीनामन्यतम[1]मेव भवेत् । तैरेव विश्वस्य सङ्ग्रहात् । तत्र द्रव्यत्वे तमःपृथिव्यादीनामन्यतममन्यद्वा ? न तावदन्यतमम् । क्षितिसलिलात्मसु चतुर्दशगुणेषु, तेजसि चैकादशगुणे, मातरिश्वनि च नवगुणे, मनसि चाष्टगुणे, नभसि च षड्गुणे, दिक्कालयोश्च पञ्चगुणयोरविनाशिनोरनन्तर्भावात् । अन्तर्भावे वा तावद्गुणत्वप्रसङ्गान्नित्यत्वापत्तेश्च । नाऽपि द्रव्यान्तरं, निर्गुणस्य तत्त्वाऽनुपपत्तेः । नीलोत्पल-

---

[1] अन्यतममेव १ पु· पा· । एवमग्रेऽपि ।

**न। सुषुप्त्याद्यवस्थासु प्रसङ्गात्। अप्रमिते च भ्रमाऽयोगात्सुषुप्त्यादिवत्।**

पलाशश्यामलमुपलभ्यमानं महच्च तमो न निर्गुणम्। अतो द्रव्यान्तरमिति चेत्? न। कृष्णरूपस्य गन्धाद्येकार्थसमवायिनस्तद्ग्राहस्य तदभावे ऽभावात्। तथा च निखिलगुणविरहिणो न द्रव्यत्वम्। गुणकर्मसामान्यभावो ऽप्यनाश्रयस्य न सम्भवति। न च पृथिव्यादिद्रव्यमस्याश्रयः। तदाश्रयत्वे तद्गुणानां तत्सहचरितानामुपलब्धिप्रसङ्गात्। न चास्य तमस उपलब्धिरुपपद्यते। उपलम्भकाऽभावात्[1]। न चेन्द्रियाणामेतत्तमो लोचनं गोचरयति। तदभावे तदनुपलब्धिप्रसङ्गात्। अस्ति च निमीलितलोचनस्याऽपि तमः पश्यामीत्यभिमानः। घ्राणादीनां गोचरस्तम इति स्थवीयः। मनो ऽपि चाऽऽन्तरगोचरनियतं बहिरसतीन्द्रियलिङ्गादौ दवीय एव। न च कारणाऽभावे कार्यमुत्पत्तुमर्हति। तस्याऽऽकस्मिकत्वेन कादाचित्कत्वाऽनुपपत्तेः। तस्मान्न तमो नाम किञ्चिदस्ति वस्तु। नापि तज्ज्ञानम्। अथ च तमस्तमालनीलमुपलभामहइत्यभिमानो लौकिकानामालोकाऽदर्शने। सो ऽयं विप्लवः। एवमभावदर्शनं तद्व्यवहारश्च विप्लवएवेति भावः।

तदेतन्निराकरोति—न। सुषुप्त्याद्यवस्थासु प्रसङ्गात्। यदि हि ज्ञानव्यवहारयोरभावे तद्विभ्रमः, सुषुप्त्याद्यवस्थास्वपि तथा प्रसङ्गः। न हि तदा ज्ञानं, नाऽपि व्यवहारः। समस्तविज्ञानोपसंहृतिलक्षणत्वात्सुषुप्त्याद्यवस्थायाः। हेत्वन्तरमाह—अप्रमिते च भ्रान्त्ययोगात् सुषुप्त्यादिवत्। प्रमितस्य हि भावस्य प्रमितएव भावे समारोपभ्रान्तिर्न पुनरसतो नापि ज्ञानाऽऽकारस्य, नाप्यग्रह इत्युपपादित विभ्रमविवेके। अत्रापि सूचयिष्यति। न च ज्ञानव्यवहारा-

[1] उपलम्भसाधनाऽभावात् इ पु पा०।

तमोदर्शनं तु भूच्छायादर्शनम् ।

भावो क्वचिदुपलब्धपूर्वो । तदुपलम्भे वा कृतमत्र भ्रमोपन्यासेन । तस्मादप्रमिते भ्रान्त्यनुपपत्तेरयुक्तमेतदित्यर्थः ।

दृष्टान्तस्तु साध्यविकल इत्याह—अत एव तमोदर्शनं तु भूच्छायादर्शनम् । अयमत्राऽभिसन्धिः । प्रमीयते तावत्तमस्तमालमालाश्यामम् । न चाऽप्रमितावेव प्रमितिविभ्रमसम्भवः । न चास्य बाधकमस्ति प्रमाणम् । न च तदभावे प्रमीयमाणमपह्नवमर्हति । अतिप्रसङ्गात् । न च तमसि प्रमाणाऽनुपलब्धेः प्रमा प्रथमानाप्यपह्नोतुमुचिता । रूपाद्युपलब्धेरपि तत्प्रसङ्गात् । न हि तत्प्रमाणमिन्द्रियाद्युपलभ्यते । रूपाद्युपलब्धिलिङ्गकमनुमानमस्योपलब्धिरिति चेत् ? न । इहापि समानत्वात् । ननु चक्षुरादिगोचरत्वमस्येत्युक्तम् । तर्हि वरमस्तु तमसि समस्तजनसाक्षात्काराऽऽस्पदे प्रमितिकार्यदर्शनात् प्रमाणान्तरमनुपलब्धपूर्वमपि, न पुनस्तस्याऽन्यतोऽनुपलम्भात् स्पष्टदृष्टकार्यविपर्ययो युज्यते । अस्तु वा चक्षुरेवाऽस्य कारणम् । न च निमीलिताक्षस्य पटलवतो वा तन्नास्ति, अपि तु पिहितम् । कथं तर्हि पिहितं[1] घटादाविव बाह्ये तमसि प्रवर्तेतेति चेत् ? मा प्रवृतत् । किन्नश्छिन्नम् ? परिच्छेत्स्यति हि तच्छायां पक्ष्मणोः पटलस्य वाऽत्यासन्नामपि पिधातृणी पटलपक्ष्मणी पिदधती तामेवेक्षते चक्षुः, न तु पटलपक्ष्मणी । आलोकाप्यायितं सत्पृथिव्यादिग्रहे प्रभवति, न तु तच्छायायां तद्विरोधिन्यां, केवलस्येव तत्र सामर्थ्यात् । कार्यदर्शनोन्नेयत्वात्तस्य सूक्ष्ममपि चेलोकतूलादि चक्षुराच्छादकमासन्नमनुभूयमानमतिमहदनवधि चकास्ति तथेयमपि । न चाऽन्धानामितरगात्राऽवयववद् गोलकाधिष्ठाने तत्कार्योपलम्भसम्भवः । तद्भावे वा वरमुपलम्भकान्तरकल्पनेत्युक्तम् ।

---

१ कथमपि हितं त पु० पा० ।

कतमत्पुनर्द्रव्यादीनां तमः ? ननु द्रव्यमेव, कालिमगुणशालित्वात् स्पन्दवत्त्वाच्च । तथा हि । कालिमैवाऽस्य रूपमुपलभ्यते । अप्तेजसोरिव श्वेतिमा । एवं सङ्ख्याऽप्येकत्वादिका परिमाणं, तच्च-तुर्विधम् । पृथिव्याद्यणूनामिव तमोऽणूनामप्यनुमानात् । पृथक्त्व-संयोगविभागपरत्वाऽपरत्वसंस्काराश्च पञ्चविधमपि कर्माऽप्यवगम्यते । यथाहाऽभवर्तान्त्वार्तिककारः ।

न नु नाऽभावमात्रस्य तमस्त्वं वृद्धसंमतम् ।
छायायाः कार्ष्ण्यमित्येवं पुराणे भूगुणश्रुतेः ॥
भूगुणस्य कार्ष्ण्यस्य छायायां द्रव्यान्तरश्रुतेरित्यर्थः ।
दूराऽऽसन्नप्रदीपादिदेहचेष्टाऽनुकारिणी ।
आसन्नदूरदीपादिमहदल्पचलाऽचला ।
देहानुवर्तिनी छाया न वस्तुत्वादिना भवेत् ॥ इति ।

न च पृथिव्यादीनामन्यतमम् । न तावत्कृष्णरूपस्य तमसस्तोयादिभावसम्भवः । तोयतेजसोः सितत्वादेव पवनादीनां चाऽरूपत्वात् । न च परोपधानात् कालिन्दीसलिलस्येव तमसः कालिमेति साम्प्रतम् । अनुपहितस्य कदा चिदपि स्वाभाविकरूपान्तरशालिनोऽनुपलब्धेः, वेगसमुद्धृतस्येव कालिन्दीवारिणः स्वभावस्वच्छधवलस्य ।

नापि पार्थिवं तमः । तद्गुणानां गन्धादीनामभावात् । ननु तथैव गन्धादिव्याप्त कृष्णमपि रूपं तन्निवृत्तावसदित्युक्तम् । तत्किं पवनेऽनुष्णाशीतस्पर्शोऽसन्नेव ? गन्धादिव्याप्तस्य तस्य पृथिव्यामुपलब्धेः । पवने च तेषामभावात् । पाकजस्य स्पर्शस्य गन्धादिव्याप्तत्वम् । अथ त्वपाकजः स्पर्शो वायवीय इति चेन्न । इहापि साम्यात् । न हि तमसोऽपि कालिमा पाकजः । प्रत्यक्षं चोभयथाऽपि समा-

नम् । तमःपरमाणवश्च पार्थिवादिपरमाणव इव द्व्यणुकादिक्रमेण महान्तं तमोऽवयविनं पार्थिवमिवारभन्ते । तच्च रूपविशेषे सत्यनेकद्रव्यत्वान्महत्वाद्वा चाक्षुषमिति न तदुत्पत्त्यनवक्लृप्तिः । न च तस्य दिवाऽऽरम्भसम्भवः शाश्वतिकविरोधे सति तेजसि । न जातु स्पर्शवद्वेगवन्मुद्गरादिघाते परिपन्थिनि कुम्भारम्भाय भवन्ति मृदवयवाः बिभ्रति वा कुम्भमारब्धमिति । अत एव हि दिवापि निरस्ततेजसि गिरिगुहायामारभन्त एव ।

स्यादेतत् । न तामसाः परमाणवो ऽवयविनमारभन्ते । स्पर्शविरहादात्ममनोव्योम[1]वत् । न चाऽऽरम्भे रूपवत्त्वं प्रयोजकम् । अरूपाणामपि पवनपरमाणूनां स्पर्शवद्द्रव्यारम्भदर्शनादस्पर्शानां चाऽऽत्ममनसां तदभावात् । तत्किमत्र भवतां तमःपरमाणवः सन्ति न वा ? सन्ति चेत्कथन्तदवयविनामभावः ? तद्भावलक्षणत्वात् परमाणुभावस्य । असत्त्वे वा तमःपरमाणूनां कथं न हेतोराश्रयासिद्धिः ? हेतोरस्पर्शस्याऽसद्रूपत्वादसदाश्रयत्वमदोष इति चेन्न । तुच्छस्याऽहेतुत्वात्कल्पनारोपिततद्भावस्य च वस्तुनो ऽसाधकत्वात्[2] । न जातु समारोपितधूमभावा मिहिका[3] कृशानुसाधनं भवति । प्रामाणिकस्य त्वभावस्य भावाऽधिकरणमन्तरेणाऽयोगात् । तमःपरमाणुष्वसत्त्वाश्रयाऽसिद्धतया भवत्यसिद्धिः, न तु स्वतो ऽप्रसिद्धस्य सत्यामपि परप्रसिद्धौ साधनाङ्गत्वं, स्वयमप्रतीतस्य परप्रत्यायनाऽनर्हत्वात् । यथोक्तम् ।

योऽपि तावत्पराऽसिद्धः स्वयंसिद्धो ऽभिधीयते ।
भवेत्तत्र प्रतीकारः स्वतो ऽसिद्धे तु का क्रियेति ॥

१ आत्ममनःस्तोम १ पु· पा । २ वस्तुतस्त्वाऽसाधकत्वात् २ पु· पा· । ३ धूममहिषी २ पु पा ।

अपि चाऽस्पर्शस्य द्रव्याऽनारम्भकत्वेन न स्वाभाविकः संबन्धो मनसः शक्यो निश्चेतुं, दैर्घ्यस्योपाधेर्विद्यमानत्वात् । धर्माऽधर्मनिमित्तत्वाद्विश्वकार्यनिर्माणस्य । साक्षात्पारम्पर्येण च सर्वं कार्यजातं भोगसाधनं सत्तन्निर्माणं स्यात् । न च मनोऽवयविनः शरीरतया विषयतया वा भोगसाधनता सम्भवति । इन्द्रियाऽनधिष्ठानतया देहभावाऽभावात् । अपार्थिवस्य च तद्भावाऽनभ्युपगमात् । विषयभावस्त्वननुभूयमानतयाऽनुपपन्नः । इन्द्रियभावस्त्वणुत एव मनसः । तमसस्तु रूपवतो विषयभावेन भवति भोगसाधनत्वमिति न वैधर्म्यम् । परममहतां पुनरसमवायिकारणसंयोगविरहादधिकपरिमाणकार्यद्रव्याऽनुपपत्तेश्च कारणसमानन्यूनपरिमाणकार्याऽदर्शनाच्चाऽधिक्याऽयोगाच्च परममहत्त्वव्याघाताच्च न स्वसमवायिद्रव्यारम्भकत्वमिति सोऽयमुपाधिः । न चौपाधिकः सम्बन्धोऽनुमानाङ्गम् । मा भूदुपाध्यायदर्शनादसकृदवगतसहभावस्याऽनुमानं शिष्यस्य । न चाऽनन्यथासिद्धे नीलाऽन्धकाराऽनुभवे परिपन्थिनि स्फुरति प्रत्यक्षे बाधितविषयमनुमानमुदेतुमुत्सहते । मा भूदनुष्णत्व तेजसो द्रव्यत्वात्पृथिव्यादिवदित्यनुमानं, द्रव्यान्तरस्य च द्रव्यान्तराश्रयत्वं दृष्टम् । तथा आकरजस्य तेजसः सुवर्णादेः पार्थिवद्रव्योपष्टम्भो, ऽन्यथा पतनादि न भवेद् गुरुत्वाऽभावात् । यथा चाऽभिजातमहानीलादिमणिसमाश्रयं तेजः न च तद्वदेतद् भ्रमयात[1]स्तेज इति साम्प्रतम् । तेजसस्तदाश्रयस्याऽन्ततः खद्योतादिगतस्यापि कया चिन्मात्रया रूपप्रकाशनव्याप्तत्वात्तमसश्च तद्वैपरीत्यात् । तस्मात्तमो द्रव्यान्तरमपि पृथिव्याद्यनुविधास्यति, तेजसश्च विनङ्क्ष्यति । तदपगमे च पृथिव्यादिभ्यः पुनः प्रभविष्यति चतुष्कादपवरकप्रविष्टस्य कतिप-

१ भ्रमणो २ पु पा० ।

## आलोकाऽभावदर्शनं चेत्यसमानम् ।

याऽऽलोकाऽवयवसम्भेदविरले ऽपि तमसि सान्द्रताऽवगमो भ्रमः ।
इन्द्रियोपहतेः कालपरिवासवशात् । उपहतिविगमे तु यथावत्पश्य-
त्यपवरकवर्तिनः पदार्थान्, अन्यां च तत्र छायाम् । सा च सान्द्रा
पिधत्ते पदार्थान्, न तेजसा विरलीकृता । न चाऽऽलोकाभावमात्र
तम इति साम्प्रतम्, तस्य नीलत्वाऽनुपपत्तेरस्मृताऽनवलोकिता-
ऽलोकस्य च तमःप्रत्ययाऽनुपपत्तिप्रसङ्गात् । तथा च परिस्पन्दादय-
स्तद्वर्तिनो ऽवगम्यमानाः कथं चित् क्लेशेन न व्याख्यामर्हन्ति ।
तस्मात्प्रत्यक्षसिद्धमसति बाधके द्रव्यान्तरमेकादशं तमो नवगुणं[1]
चेति सिद्धम् ।

नादृष्टौ दर्शनं छाया न ऽत्राभावो ऽस्मृतौ गतेः ।
रूपादुपायसद्भावाद् द्रव्यं द्रव्यान्तराऽनुगम् ॥
इति सङ्ग्रहश्लोकः ।

अलं वा नैयायिकैर्विवादेन । आलोकाऽभाव एव तमः । तथा
ऽपि सिद्ध्यत्येव नः समीहितमित्याह—आलोकाऽभावदर्शनं चेति ।
तस्मादसमानं दार्ष्टान्तिकेनेति । तद्यदि प्रमाणग्राह्यता प्रमाणसम्ब-
न्धो, यदि वा तदर्हता, उभय्यप्यसावभावे सदा ऽस्तीति तस्यापि
सत्त्वप्रसङ्गः । अथ स्वरूपवर्तमानता[2], न सा ऽभावे ऽस्ति । न ।
अतुच्छत्वोपपादनात् । न चैवमपि प्रतिभात्वं[3] भेदवती सत्सदिति
बुद्धिव्यपदेशयोरभिन्नाऽर्थावगाहिनोर्गोचरो भवितुमर्हति । अभेदे वा
ऽभिधानान्तरेण सामान्यमेव तत् । पूर्वोऽभिमर्शमन्तरेण सामान्यमप्रा-
माणिकमिति चेत् ? न । विकल्पाऽसहत्वात् । कः खल्वयं पूर्वोऽभिमर्शो
ऽभिमत आयुष्मतः, यावदुपलब्धरूपपरामर्शः, आहो स्वित् कतिपया-

---

१ अवगुणं २ पु पा. । २ वर्तमानार्हता १ पु॰ पा॰ ।
३ प्रतिव्यक्ति २ पु॰ पा॰ ।

**अस्तु वा प्रमाणग्राह्यता, वर्तमानता तु सत्त्वमुच्यते ।**

नामपि रूपाणाम्? तत्र प्रथमस्य न क्वचिदपि सम्भवः । न खलूपलब्धचरगिनाभकस्या[1]पि वर्षासु शरदि पुनः पश्यतस्तादृशः पूर्वोऽवमर्शोऽस्ति । तस्याऽपि तदभावादन्यत्वप्रसङ्गः । कतिपयपरामर्शोऽत्रापि समानः । अस्ति खलु कतिपयानां रूपाणामनुगमस्तत्सरेणुकरेणवोर्विविधभेदसमवायेऽपि वा द्रव्यत्वादिना । तस्माद्यथा सद्बुद्धिव्यपदेशयोरनन्यथासिद्धेर्गुणवत्त्वस्य च प्रतिगुणवद्भेदेन तदुपपादनाऽसामर्थ्यात् यत्र द्रव्यगुणकर्मसामान्यानामपि अत्यन्तभिन्नानामपि सदित्यभिन्नबुद्धिव्यपदेशभाजामनुस्यूतमस्ति तत्सत्त्वम् । यस्य च त्रैकाल्याऽसम्बन्धादत्यन्ताऽसन्तः शशविषाणादयो, यस्य चाऽयोगव्यवच्छेदादत्यन्तसन्तः परमाण्वाकाशादयो, यस्य चात्यन्ताऽयोगव्यवच्छेदात्कदाचिदेव सन्तः पटादयो, यस्य च सम्बन्धाद् द्रव्यगुणकर्मसामान्यानि स्वाऽभावव्यवच्छेदेन स्वाऽनुभवाद्भासन्ते, सामान्यरूपभूयस्त्वाऽल्पीयस्त्वनिबन्धनश्च तत्र वैलक्षण्याऽवगतिभेदः । यथाऽऽहाचार्यः ।

> सामान्यरूपभूयस्त्वे तस्मात्तत्त्वं प्रकाशते ।
> विलक्षणत्वमल्पत्वे चकास्ति तदनुद्भवात् ॥ इति ।

तदेतद् ब्रह्मसिद्धौ कृतश्रमाणां सुगममिति नेह प्रपञ्चितम् ।

अभ्युपेत्योच्यते । अस्तु वा प्रमाणग्राह्यता सत्त्वं, तथाऽपि वर्तमानता तु सा । कस्मात्? अतीताऽनागतयोः प्रमाणग्राह्ययोरप्यसत्प्रतीतिव्यवहारास्पदत्वात् । वर्तमानतैव हि सत्त्वमुच्यते । तथा च वस्तुनः कालाऽनवच्छिन्नो नियोगः प्रमाणग्राह्योऽप्यसन्नेव सत्त्वान्न मानान्तराऽगोचर इति सिद्धम् ।

---

१ पिनाभेदस्य २ पु पा ।

**अर्थोऽभावो नियोगस्य शाब्द्यां भूताद्यपाकृतौ ।**
**अनन्यगोचरत्वं न प्रमाणान्तरजन्मनि ॥**

अशाब्दश्चेन्नियोगो नाभून्नास्ति न भविष्यतीति बोधयति न नियुक्तो न नियुज्यते न नियोक्ष्यते वा स्वर्गकाम इति वाक्यार्थः स्यादिति सुनिरूपितो ऽधिकारः । अथ न शाब्दो भूतादिप्रतिक्षेपः किं तु तस्यौदासीन्यान्मानान्तरतस्तथा ऽवसायः । न तर्ह्यनन्यगोचरः । मानान्तरेण तथात्वस्या-ऽवसायात् शब्दप्रमितस्य विशेषस्ततः । प्रत्यक्षस्येव गिरेरग्निमत्ता ऽनुमानात् । न । विशिष्टाऽपरिच्छेदे विशेषण-

अपि च—

अर्थाभावो नियोगस्य शाब्द्यां भूताद्यपाकृतौ ।
अनन्यगोचरत्वं न प्रमाणान्तरजन्मनि ॥

अपि चास्य त्रैकाल्याऽनवच्छेदः शब्देन वा प्रतिपाद्यते, मानान्तरेण वा ? यदि शब्देनाऽत्यन्ताऽसत्त्वम् । मानान्तरेण तु त्रैकाल्यव्यवच्छेदे मानान्तरगोचरत्वप्रसङ्गाद्विवक्षितत्वभङ्ग इत्याह—अशाब्दश्चेन्नियोगो नाऽभून्नास्ति न भविष्यतीति बोधयति तथा सति न नियुक्तो न नियुज्यते न नियोक्ष्यते स्वर्गकाम इति वाक्यार्थः स्यादिति सुनिरूपितोऽधिकारः । अथ न शाब्दो भूतादिप्रतिषेधः, तस्य शब्दस्य तेषु भूतादिषु निषेध्येष्वौदासीन्यात्, किन्तु मानान्तरतस्तथाऽवसायः, त्रैकाल्यव्यवच्छेदेनाऽवसायः । न तर्ह्यनन्यगोचरः । कुतः ? मानान्तरेण तथात्वस्य त्रैकाल्यावच्छेदस्याऽवसायात् ।

शङ्कते—शब्दप्रमितस्य नियोगस्य विशेषस्त्रैकाल्यविवेकस्ततो मानान्तरात् । न पुनर्मानान्तरं नियोगे प्रवर्ततइति । अत्रैव निदर्शनमाह—प्रत्यक्षस्येव गिरेरग्निमत्ताविशेषो ऽनुमानात्, न तु तदग्नि-

स्याऽविषयत्वात्। अपि च अन्यतोपि तथात्वाऽधिगमेऽनियोग एव स्वर्गं कामः। तस्यापि प्रमाणत्वात्। अतत्त्वे वा भूतादिविवेकाऽभिधानं प्रलापः। ननूपाधयो भूतादयः, न चोपाधिनिवृत्तावुपाधिमतो निवृत्तिरप्रतीतिर्वा। भवत्वन्योपाधिष्वेवमिह त्वेतल्लक्षणमेवाऽत्यन्ताऽसत्त्वम्। नित्या-

मतागोचरं गिरिमपि गोचरयितुमर्हति। निराकरोति—न। विशिष्टाऽपरिच्छेदे विशेषस्याऽविषयत्वात्। न ह्यस्ति सम्भवो यद्विशिष्टं पर्वतादि न परिच्छिद्यते, तद्विशेषश्चाऽग्निमत्त्वं गम्यतइति। न चाऽप्रत्यक्षीकृतपर्वतस्तद्विशेषमनुमातुमर्हतीति साम्प्रतम्। अनुमानसमये प्रत्यक्षज्ञानस्याऽतीतत्वेन गिरेरपरिच्छेदात्स्मृत्यनुपपत्तेश्च। तदा युगपद् ज्ञानोत्पत्तेरनुपपत्तेरन्तःकरणस्य प्रत्ययपर्याये सामर्थ्यात्। अन्यथा समानगोचरबुद्धिधारानुपपत्तेः। सकृदेव यावत्कर्त्तव्यकरणात्। समर्थस्य क्षेपाऽयोगात्। प्रत्यक्षानुमानयोश्च धर्मिधर्मरूपमात्रगोचरतया सह स्थितावपि विशिष्टत्वा[1]ऽनवभासनात्। अपि चास्याऽन्यतोऽपि तथात्वाऽधिगमेऽनियोग एव स्वर्गकामः। तस्याऽपि प्रमाणत्वात्। कारकत्वविरहात्। तत्त्वे वा[2] भूतादिविवेकऽभिधानमप्रामाणिकः प्रलापः। चोदयति—ननूपाधयो विशेषणानि वस्तुनो भूतादयः कर्णस्येव कुण्डलादयः। न पुनः स्वभावः। ततः किं? मित्यत आह—न चोपाधिनिवृत्तौ सत्यामुपाधिमतोऽपि निवृत्तिरप्रतीतिर्वा। न खलु कुण्डलनिवृत्तौ कर्णो निवर्त्तते, न प्रतीयते वा। परिहरति—भवत्वन्योपाधिषु कुण्डलादिष्वेवम्, इह त्वेतल्लक्षणं त्रैकाल्यविवेकलक्षणमेऽत्यन्ताऽसत्त्वम्। न खलु

१ विशिष्टतत्त्व ३ पु. पा। २ अतत्त्वे ३ पु. पा।

ऽनित्यत्वोपाधिनिवृत्तौ च नोपाधिमत्सम्भवः । प्रत्यक्षं त्वापातजन्मकाले भेदोपाधिविविक्तरूपमात्रग्राहीति न ततो विषयभेदः । अवर्त्तमानस्याऽरूपत्वाद्वर्त्तमानविषयं तत् । सत्यं वस्तुतो न प्रमितितः । वस्तुतो वर्तमानादिविवेके निरात्मकत्वमत्यन्ताप्रमितितो न विषयभेदात्प्रमाणान्तराऽनपेक्षत्वं शब्दस्य । सैषोभयतस्पाशा ।

ननु प्रतीयते यजेतेति कार्योऽर्थो, न स भविष्यन्मानाऽभावात् एकान्ताऽनवधारणात् । कार्यत्वादेव नेतरकालाऽनुपाती । न च नास्ति । प्रतीतेः । उक्तोत्तरमेतत् ।

यथा विषाणादीनामत्यन्ताऽसत्त्वमन्यत् । अतस्त्रैकाल्यविवेकात् । न केवलमयमन्येऽपि सन्ति ते उपाधयो ये निवर्तमाना वस्तुसत्तां निवर्तयन्तीत्याह नित्याऽनित्यत्वोपाधिनिवृत्तौ नोपाधिमत्सम्भवः । अपि च शब्दतस्त्रैकाल्याऽनवमर्शे प्रत्यक्षं त्वापातजन्यविशेषणविशेष्यभावाऽनवमर्शात् कालभेदोपाधिविविक्तरूपमात्रग्राहीति न ततः प्रत्यक्षाद्विषयभेदः शाब्दस्य ज्ञानस्य भवेत् ।

शङ्कते- अवर्तमानस्याऽरूपत्वाद्वर्तमानविषयं तत् । निराचष्टे-सत्यं वस्तुतो न प्रमितितः । उक्तमर्थं सङ्क्षिपति—तथ नियोगे वस्तुनो वर्तमानादिविवेके निरात्मकत्वमत्यन्ताऽप्रमितितो न विषयभेदात् प्रमाणान्तराऽनपेक्षत्वं शब्दस्य, सैषोभयतस्पाशा रज्जुः ।

चोदयति - ननु प्रतीयते यजेतेति कार्योऽर्थो न स भविष्यन्, भविष्यत्यर्थे प्रमाणाऽभावादेकान्ताऽनवधारणात्वाऽनिश्चयात् । मा भूद्भविष्यन्, वर्तमानोऽतीतो वा स्यादित्यत आह—कार्यत्वादेव नेतरकालाऽनुपाती । गगनकुसुमायमानस्तर्हीत्यत आह—

**सात्मकत्वे न वस्तुनः कालभेदः, प्रमितितश्चेन्न विषयभेद इति नैरात्म्यम् । कथं तर्हि प्रतीतिः ? अत एव प्रतिभामात्रं विकल्पमात्रं वा शाब्दज्ञानमिति विपश्चितः । प्रतिभानिबन्धनश्च व्यवहारः । प्रतिभाऽनुगृहीतानि च प्रमाणानि व्यवहाराऽङ्गमिति ।**

न च नास्ति । कुतः ? प्रतीतिः । न ह्येकान्तासतः प्रतीतिविषयभाव सम्भवतीति । परिहरति—उत्तरमेतत् । उक्तप्रायमस्योत्तरम् । तद्दर्शयति—सात्मकत्वे न वस्तुनः कालभेदविवेकः प्रमितितश्चेन्न विषयभेदः, प्रत्यक्षाद् घटादिशब्दाच्चेति । तस्मान्मानान्तराऽगोचरत्वमिच्छता नियोगस्य चैकान्त्यसम्भेदविरहमन्तरेण तदनुपपत्तेर्नैरात्म्यमापतेत् ।

कथं तर्हि प्रतीतिरत्यन्ताऽसतः ? उत्तरम् अत एवाऽसद्गोचरत्वादेव प्रतिभामात्रं विकल्पमात्रं वा शाब्दज्ञानमिति विपश्चितः । असत्प्रतीतिरेव प्रतिभेति वा विकल्प इति वा मतभेदेन व्यपदेशभेदवती । एतदुक्तं भवति, नाऽत्यन्ताऽसत्प्रतीतिरगोचरोऽपि तु प्रमितेः । नन्वसद्विषया प्रतीतिः कथं व्यवहाराऽङ्गम् ? न खलु खद्योतं दहन इति मन्यमानस्तेन दहति पचति वेति । अत आह—प्रतिभानिबन्धनश्च व्यवहारः । नाऽस्त्ययं नियमो, ऽसदर्थविज्ञानं न व्यवहाराङ्गमिति । संशयविपर्ययौ हि तथा । ताभ्यां व्यवहाराऽनुपपत्तेः । प्रतिभा पुनर्व्यवहारहेतुः । तद्भावाऽभावाऽनुविधानाद् द्रव्यव्यवहारभावाऽभावयोरित्यर्थः । यद्येवं न तर्हि व्यवहारसाधनत्वं प्रमाणानां, प्रतिभात एव तत्सिद्धेरित्यत आह—प्रतिभाऽनुगृहीतानि च प्रमाणानि व्यवहाराङ्गम् । एतच्चोपरिष्टात् स्पष्टयिष्यतीति । इतिः समाप्तौ ।

अपि च -

वेदार्थ इत्थमाशङ्का नियोगस्य न कार्य्यता ।
नियुक्तस्य प्रवृत्तिश्च न नियोगैकबन्धना ॥

यत् खलु न भूतं न वर्त्तमानं भावि न वेत्यनवधारितैकान्तं तदाशङ्काज्ञानगोचरो, यथा वर्षमनतिपतितमप्रवृत्तमतिनीलबहलजलदोदयदर्शनसामर्थ्येन प्रत्ययपथमनुपतद्व्यभिचारदर्शनादनिश्चीयमानैकान्तम्। इमां चाऽवस्थां वन वेदार्थः प्रज्ञाशालिभिरुपनीतो ऽतिव्याख्यया ।

अपि च विषयः कार्य्यो न नियोगः। कार्यश्च वेदप्रमेयः

अपि च—

वेदार्थ इत्थमाशङ्का नियोगस्य न कार्यता ।
नियुक्तस्य प्रवृत्तिश्च न नियोगैकबन्धना ॥

यत्खलु न भूतं न वर्तमानं भावि न वेत्यनवधारितैकान्तं तदाशङ्काज्ञानगोचरः। तद्यथा वर्षमनतिपतितमभूतमप्रवर्तमानमतिनीलबहलजलदोदयाद्बहुलदर्शनसामर्थ्येन प्रत्ययपथमनुपतत् किञ्चिद्व्यभिचारदर्शनादनिश्चीयमानैकान्तम् । ततः किमित्याह—इमां चाऽवस्थां वेदार्थः प्रज्ञाशालिभिरुपनीतो ऽतिव्याख्यया । निश्चयफलं हि प्रमाणम् । अयं च[1] स्वार्थे शङ्कामनिश्चयात्मिकां विदधानो ऽप्रमाणं स्यादित्यर्थः ।

तदनेन वेदार्थ इत्थमाशङ्केति विवृतम् । नियोगस्य न कार्यतेति विवृणोति—अपि च विषयः कार्यो न नियोगः । आज्ञादिषु हि नियोगेषु स्वाम्यादिनियोक्तृकेषु विषयः कार्यो ऽवगम्यते नियोज्येन । न त्वाऽऽज्ञादयो नियोगा इत्यर्थः । ततः किमित्याह—कार्यश्च वेदप्रमेयो लोकाऽनुसारात् । ननु द्रव्यादयो ऽपि तत्पदेभ्यो

1 अयमनुमान ? च पु पा ।

**इतरपदार्थानां तदन्वयित्वात् । तस्यैव कालविवेको मानान्तराऽगोचरतया ऽनपेक्षत्वसिद्धये ऽभिधानीयः। ननु नियोगएव कार्य्यत्वप्रत्ययः। एवं हि व्यपदिशन्ति,आचार्य्यनियोगः कर्त्तव्यो राजशासनमनुष्ठेयमिति । नैतत् । नियोज्यस्य नियोक्तृत्वप्रसङ्गात्। नियोगस्य हि कर्त्ता नियोक्तेति। अपि च। यागे नियोगात्कर्त्तव्यता तस्य कुतः ? न ह्येष तत्र नियुज्यते ।**

ऽवगम्यत इति कथं तस्यैव वेदप्रमेयते ? त्यत आह - इतरपदार्थानां तदन्वयित्वात् । कार्यान्वयित्वात् । एतदुक्तं भवति । सर्वमेव पदजातं कार्यपरं, तत्रैव व्युत्पत्तेः, तत्र किञ्चिदभिधायकतया, यथा लिङादि । किञ्चित्तु तदर्थस्वार्थाऽभिधायकतया यथा दध्नेत्यादि । भवत्वेवं, प्रकृते तु किमायातं ? मित्यत आह—तथा च तस्यैव कार्यस्यैव वेदार्थस्य कालविवेको मानान्तराऽगोचरतया ऽऽम्नायस्य चाऽपेक्षत्वसिद्धये ऽभिधानीयो न तु नियोगस्य, तस्याऽकार्यत्वेन वेदार्थत्वाऽभावात्। न चासौ कालरहितः। तस्य कारकव्यापारविषयतया[1] त्रैकाल्यपरामर्शसम्भवादिति भावः ।

चोदयति—ननु नियोगे एव कार्यत्वप्रत्ययो लौकिकानाम् । कुतः ? एवं हि व्यपदिशन्ति, आचार्यनियोगः कर्तव्यो, राजशासनमनुष्ठेयमिति । परिहरति—नैतत् । कुतः ? नियोगश्चेन्नियोज्यस्य कार्यः, तथा च सति नियोज्यस्य नियोक्तृत्वप्रसङ्गात् । कस्मात् ? नियोगस्य हि कर्ता नियोक्ता । यथा स्वाम्यादिराचार्यादेः । अपि च यागे विषये नियोगात्कर्तव्यता तस्य नियोगस्य । कुतः कर्तव्यता ? यद्युच्येत, नियोगादिति, तत्राह—न ह्येष तत्र नियोगे नियुज्यते । नियोगान्तराऽभावात् । स्वात्मनि च विषयविषयिभावाऽनुपपत्तेः । भेदाऽधिष्ठानत्वात्तस्य ।

---

१ व्यापारतया २ पु पा ।

**स्वरूपेणैव स कार्यः, न तत्राऽन्यापेक्षा विषयवत् । किं तु यजेतेति याजयेदित्यर्थः स्यात् । तथा च स्वर्गकामो ऽन्यनियोगमात्रेण कृतार्थः स्यादिति साधु सुसंपादितमत्रभवता । नियोगार्थे च कार्ये स्वर्गयागयोः परस्पराऽसम्बन्धस्तदन्वयात् ।**

शङ्कते—स्वरूपेणैव स नियोगः[1] कार्यः । न तत्राऽन्यापेक्षा नियोगान्तरापेक्षा विषयवत् यथा हि विषयो विषयिनियोगकर्मत्वापेक्षात्कर्तव्यः, यथाह—"यत्तु तत्सिद्ध्यर्थमुपादीयते तद्विधेय"-मिति तन्त्रे व्यवहार इति, नैव नियोगस्य कर्तव्यता, स्वभावत एव तस्य तत्त्वादित्यर्थः । परिहरति—भवतु, किन्तु यजेतेति याजयेदित्यर्थः स्यात् ।

अयमभिसन्धिः । न तावदपूर्वं भावार्थविषयं कार्यतयाऽवगम्यमानं स्वात्मनि नियोज्यं प्रेरयन्नियोगो लिङाद्यर्थ इत्युपपादितमधस्तात् । तथा चाऽऽज्ञादय एवाऽवशिष्यन्ते इति यजेतेति लिङा कार्यं नियोगमभिदधता यागविषयाऽऽज्ञादिरर्थः कर्तव्य इत्युक्तं स्यात् । तस्य चाऽपौरुषेये वेदेऽपि सम्भवः । न चाऽऽज्ञादयो विषयाऽनुष्ठानमन्तरेणाऽऽज्ञापयितारं कर्तुमशक्याः । न खलु राजा शिबिकां नियुञ्जानः शिबिकावहने वहति स्वयं शिबिकाम् । ततश्च स्वर्गकामो यागनियोगकरणमात्रेण कृतार्थः स्यादिति साधु सुकरं सम्पादितमत्रभवता ।

अतश्च न नियोगः कार्य इत्याह—नियोगार्थे च कार्ये स्वर्गयागयोः परस्पराऽसम्बन्धः । कुतः ? तदन्वयात् । कार्यरूपनियोगान्वयादुभयोः ।

---

1 एव नियोगः पु पा० ।

एकनियोगसम्बन्धिनोरकर्णैकह्रायनीयविनियमात्। सत्यम्। नाऽन्यकामो यागनियोगे। स्वर्गकामनियोगो न यागादन्यत्र। साध्यसाधनभावस्त्वयुक्तः।

ननु न नियोगो विषयनियोज्यसम्बन्धमकुर्वन् कर्तव्यताऽवगमायाऽलं, रूपाऽभावात् कं चित्क चिन्नियुङ्क्त इति हि नियोगस्य रूपमस्येदं कर्तव्यमिति। न च सम्बन्धो गुणप्रधानभावादृते सम्भवतीति नेष्टुं परनिष्पत्तये इति

चोदयति—एकविनियोगसम्बन्धिनोः स्वर्गयागयोरकर्णैकह्रायनीयवन्नियतः परस्परसम्बन्धः स्यात्। एतदुक्तं भवति। न विनियोगोपमर्द्दी नियोगः। तद्विषयतया तदविरोधेन ऽवस्थानात्। परिहरति—सत्यं, नाऽन्यकामो यागनियोगे। स्वर्गकामनियोगो न यागादन्यत्र। साध्यसाधनभावस्त्वयुक्तः। स्वर्गयागयोरेकनियोगसम्बन्धिनोरपि स्वर्गकामयागयोरिव सम्बन्धो ऽवगम्यते, न पुनः स्वर्गयागयोः। अनवगम्यमानश्च विनियोगो न नियोगविषय इत्यर्थः।

चोदयति—ननु न नियोगो विषयनियोज्यसम्बन्धमकुर्वन् स्वयं कर्तव्यताऽवगमायाऽलम्। कुतः? तदसम्बन्धे रूपाऽभावात्। नियोगस्यौपाधिकं[1] रूपं दर्शयति—कं चिन्नियोज्यं स्वर्गकामादिं क्व चिद्विषये यागादौ नियुङ्क्ते इति हि नियोगरूपं, विषयनियोज्याभ्यामस्य निरूप्यमाणत्वात्। ताभ्यां निरूप्यमाणत्वं दर्शयितुं स्वरूपमप्याह—कार्यताऽऽकारेण प्रथमं निरूप्यत्वमस्येदं कर्तव्यमिति। न वा तया ऽपि नियोज्यद्वारा स्वर्गस्य यागसम्बन्धो गुणप्रधानभावादृते सम्भवतीति नेष्टुं परनिष्पत्तय इति स्वर्गस्याऽप-

1 नियोगस्यौपाधिकमिति नास्ति ब पु पा।

स्वर्गस्याऽपरार्थत्वाद्यागस्य तादर्थ्यम् । इष्टसंयुक्ते तदर्थाऽन्वयप्रतीतेः । करोतु नियोज्यविषयसंबन्धं नियोगो, विषयनियोज्यविशेषणसङ्गतिस्तु कुतः ?

विशिष्टसम्बन्धाच्चेत् । जीवनादेरपि प्रसङ्गः। किमतः? अङ्गत्वं वा निमित्तस्य प्राधान्यं वा । अङ्गत्वे ऽतिदेशप्रसङ्गो निमित्तस्य ।

रार्थत्वाद्यागस्याऽनिष्टत्वेन तादर्थ्ये स्वर्गार्थत्वम् । तस्मात्सिद्धः स्वर्गयागयोः साध्यसाधनसम्बन्धः । नन्वयं तादर्थ्ये सति, तदेव कुत ? इत्यत आह—इष्टसंयुक्ते वाक्ये स्वयमनिष्टस्य तदिष्टार्थोऽन्वयप्रतीतेः । दूषयति—करोतु नियोज्यविषयसम्बन्धं नियोगः, विषयनियोज्यविशेषणसङ्गतिस्तु कुतः ? ययोरेकनियोगसम्बन्धस्तयोर्भवतु परस्परान्वयनियमः स्वर्गकामयागयोः, स्वर्गयागयोस्तु किमायातं ? न हि स्वर्गो याग इव नियोगेन सम्बद्धः, अपि तु नियोज्यविशेषणमित्यर्थः ।

चोदयति—विशिष्टसम्बन्धाच्चेत् । यद्यपि न साक्षात्स्वर्गो नियोगेन संबद्धः, तद्विशिष्टस्तु नियोज्यो नियोगसंबद्ध इति स्वर्गोऽपि तन्मुखेन नियोगसंबद्ध इत्येकनियोगसम्बन्धाद्यागेनापि संबध्यते । तथा च साध्यसाधनभावसिद्धिरनयोरित्यर्थः । दूषयति—जीवनादेरपि निमित्तस्य नियोज्यसम्बन्धद्वारेण नियोगसम्बन्धे यागादिसम्बन्धप्रसङ्गः । चोदकः पृच्छति, किमतः ? उत्तरम्—अङ्गत्वं वा निमित्तस्य नियोगविषये यागादौ प्राधान्यं वा । तत्राऽङ्गत्वे विकृतौ समिदादिवदतिदेशप्रसङ्गो निमित्तस्य । प्राधान्यं तु यागं प्रति साध्यत्वलक्षणं जीवनादेर्निमित्तस्य सिद्धस्य न सम्भवत्येव ।

**प्राधान्ये काम्यनैमित्तिकाधिकारयोरविशेषः। उभयोः कार्यनिष्ठत्वान्न नैमित्तिकः प्रयोगनिष्ठः स्यात्। तथा चोभयत्र सर्वाङ्गोपसंहारो न वा। नियोज्यभेदसमर्पणेन कृतार्थस्य जीवनादेर्न विषयसम्बन्धः स्यात्। आर्थस्तु निमित्तनैमित्तिकभावः। तस्मिंश्च सति तत्राऽधिकारात् स्वर्गकामो यजेतेत्यपि तथैवं स्यात्। न भविष्यति। साध्यस्यैव विशेषणत्वात् काम्यत्वात्। तथापि न विष-**

अभ्युपेत्योच्यते। प्राधान्ये काम्यनैमित्तिकाऽधिकारयोरविशेषः। कुतः? उभयोः कार्यनिष्ठत्वात्। ततश्च न नैमित्तिकः प्रयोगनिष्ठः[1] स्यात्। मा भूत्, को नः पीडेत्यत आह—तथा चोभयत्र काम्ये नैमित्तिके च सर्वाऽङ्गोपसंहारो न वा? चोदक आह—नियोज्यभेदसमर्पणेन कृतार्थस्यैव जीवनादेर्न विषयसम्बन्धः स्यात्। न ह्यस्य विषयसम्बन्धमन्तरेण वैयर्थ्यं, नियोज्यावच्छेदकतयाऽर्थवत्त्वादित्यर्थः। यदि नियोज्यभेदसमर्पणेन चरितार्थं जीवनं न सम्बन्धान्तरमर्हति, हन्त भो निमित्तनैमित्तिकभावमपि न भजेतेत्यत आह—नियोज्यभेदसमर्पणपरस्यैव जीवनादेः। आर्थस्तु निमित्तनैमित्तिकभावः। अर्थेना दर्शयति—तस्मिन् सति तत्राऽधिकारात्। दूषयति—स्वर्गकामो यजेतेत्यपि तथैवं स्यात्। नियोज्यविशेषणं कामो निमित्तत्वेन सम्बध्यते, न साध्यतयेत्यर्थः। चोदक आह—न भविष्यति कामस्य निमित्तभावः। सिद्धस्य निमित्तता भवति, कामस्य तु साध्यस्यैव नियोज्यविशेषणत्वात्। साध्यतैवाऽस्य कुतः? इत्यत आह—काम्यत्वात्। यो हि यदिच्छति तत्तस्य साध्यम्। इच्छाप्रयत्नयोर्विषयाधिकारयोरभावादिति भावः। दूषयति तथाऽपि न विषयसम्बन्धे कामस्य प्रमाणमस्ति।

१ नैमित्तिकं प्रयोगनिष्ठं ३ पु० पा०। २ प्रवृत्त्यो० ३ पु० पा०।

**यसम्बन्धे प्रमाणम्। अन्यसाध्यस्यापि विशेषणत्वोपपत्तेः। इच्छामात्रदृष्टेश्च। ननु कामिनो ऽधिकाराऽवगतिः कामोपाये ऽवकल्पते, नान्यथा तत् नियोज्येन कृतं स्यात्। कामिना कृतं नियोज्येन कृतं स्यात्।**

ननु साध्यं साधनाऽपेक्षीति सन्निधानाद्द्वयः साधनतया ऽनेन सम्बन्धस्यतइत्यत आह—अन्यसाध्यस्यापि विशेषणत्वोपपत्तेः। अयमभिसन्धिः। समानपदोपादानतया नियोगेनैव स्वविषयो भावार्थः कारणतया स्वीकृतो नाऽन्यत्र तद्भावमनुभवितुमर्हति। साध्यद्वयसमवायस्यैकवाऽसम्भवाद् वाक्यभेदप्रसङ्गात्। न च स्वर्गनियोगयोः साध्यत्वमन्यथा नोपपद्यते, येन साध्यवित्तिः कल्प्येत। अन्यसाध्यस्याऽपि स्वर्गस्य नियोज्याऽवच्छेदकतया नियोगसाध्यत्वप्रतिपत्तेरुपपत्तेरिति। अपि चाऽभ्युपेत्य साध्यत्व कामस्येदमुक्तं, परमार्थतस्तु साध्यताऽपि न प्रतीयतइत्याह—इच्छामात्रदृष्टेश्च। प्रयत्नव्याप्यता हि साध्यता, न पुनरुद्देश्यतामात्र,[1] नाऽपि तदविनाभाविनी सा। न खलु कारणान्यवश्य कार्यवन्ति, व्यभिचारादिति भावः।

चोदयति—ननु कामिनो ऽधिकाराऽवगतिर्नियोगाऽवगतिः, प्रधान कार्यं प्रत्यात्मनस्तोरग्रीन्यविज्ञानमिति यावत्, कामोपाये स्वर्गाद्युपाये एव धात्वर्थविषयत्वः कार्यस्य नियोगस्य काम्योत्पादाऽनुकूलत्वे सत्यवकल्पते। यस्मान्नाऽन्यथा काम्य ऽनुपायत्वे तत्कर्म कामिना नियोज्येन साधनं कृत स्यात्किन्तु पुरुषमात्रेण। फलाऽनुकूलनियोगावगमे हि विवृद्धे स ध्ये एकस्मिन्नयोगफलरूपसाधनतया ऽवगम्य कर्म प्रयुज्येत। तदवश्यमेवंविधनियोगप्रतीतिसमर्थ्योद्धात्वर्थस्य कामोपायत्वमभ्युपेयमित्यर्थः।

उत्तरम्—कामिना कृतं नियोज्येन कृतं स्यात्। कामोपायस्त-

---

[1] न पुनरिष्टकर्मतामात्र २ पु पा०।

न तु कामः प्रवृत्तिहेतुः, अधिकारहेतुस्तु। अधिकारहेतुका च प्रवृत्तिरिष्यते न फलहेतुका, प्रागधिकारात्तदज्ञानात्।

ननु कामिनोऽधिकारः। कामोऽनुपायेच न कामनिमित्तः। अधिकारो न निर्निमित्तो न वाऽन्यनिमित्तः। कामनिमित्तः। सत्यस्मिन्नधिक्रियमाणत्वात्।

नन्वनुपायेऽधिक्रियमाणस्य न फलार्थिता निमित्तम्। उपाये ह्युपेयार्थिता नियोगनिमित्तम्। सिद्धे

हि कर्मेत्यत आह-न तु कामः प्रवृत्तिहेतुः। यदि हि प्रवृत्तिहेतुः कामो भवेत्ततो नाऽनुपाये प्रवर्तते कामीति प्रवृत्तिविषयस्य तदुपायत्व स्यात्, न त्वस्य प्रवृत्तिहेतुतेत्यर्थः। किमयमहेतुरेव कामः? तथा च व्यर्थमस्य श्रवणमित्यत आह—अधिकारहेतुस्तु। नियोगाऽवगमनहेतुस्तु नियोज्यावच्छेदकतया। कुतस्तर्हि प्रवृत्ति? रित्यत आह—अधिकारहेतुका च प्रवृत्तिरिष्यते, [illegible]लहेतुका। कुतः? प्रागधिकारात्तत्फलाऽज्ञानात्। नियोगाऽवगमस्य पुनः पुरस्ताच्चेत्फलमवगन्तव्य, कृत फलाऽवगमेन, नियोगाऽवगमादेव प्रवृत्तिसिद्धेरित्यर्थः।

पुनश्चोदयति—ननु कामिनोऽधिकारः स्वर्गकामादिपदसम्बन्धादवगम्यते। तथा च कामो निमित्तमधिकारस्येत्यर्थः। भवतु, किं तत? इत्याह—कामोऽनुपाये च न कामनिमित्तो नियोगः। नापि निर्निमित्त इत्याह—अधिकारः कार्यरूप इति। न निर्निमित्तः। स्वरूपहानिप्रसङ्गात्[१]। न वाऽन्यनिमित्तः। कामपदवैयर्थ्यादिति भावः। उक्तम् कामनिमित्त। कुतः? सत्यस्मिन् कामेऽधिक्रियमाणत्वात्।

चोदकः स्वाभिप्रायं कथयति—नन्वनुपायेऽधिक्रियमाणस्य फलार्थिता न हि नियोगावगमस्य निमित्तम्। कुतः? उपाये ह्युपेयार्थिता नियोगाऽवगमनिमित्तम्। दूषयति—यद्युपेयार्थिताऽनु-

---

१ स्वरूपव्याहतेरतिप्रसङ्गात् व पु पा।

**तर्ह्युपायोपेयभावे नियोगः । न नियोगात्तत्सिद्धिः । सिद्ध एवाऽसौ नियोगात्प्रतीयते । न । सापेक्षत्वात् । तथा हि- यदि विशिष्टपुरुषनियोगः शब्दार्थः कथं स नियोगाद्गम्यते ? अथ फलविशेषनिमित्तको नियोगः, नासौ प्रागसिद्धे तद्भावे इति प्राक्सिद्धतद्भावाऽपेक्षः शब्देनोच्यत इति प्रमाणान्तराऽपेक्षत्वप्रसङ्गः ।**

पाये नियोगाऽवगमनिमित्तं, सिद्धे तर्ह्युपायोपेयभावे नियोगः । अस्मिन्निति ब्रुवन्तं प्रत्याह—न नियोगात्तत्सिद्धिः । ततश्च सेत्स्यति इति भावः । चोदक आह—सिद्ध एवासौ नियोगात्प्रतीयते । अयमर्थः । न तदवगमपुरःसरं नियोगविज्ञानम्, अपि तु नियोज्यस्य स्वर्गकामस्य यागे नियोगाऽवगमो ऽपर्यवस्यन् स्वर्गयागयोः साध्यसाधनभावमाक्षिपति । तेन सिद्ध एवोपायोपेयभावः । कारणान्तरान्वयेन ज्ञाप्यत इति । तद् दूषयति—न । सापेक्षत्वप्रसङ्गात् । तद्दर्शयति—तथा हि । यदि विशिष्टपुरुषनियोगः शब्दार्थः । यो हि पुरुषः स्वर्ग उपायेन मे[1] साध्य इत्यवगच्छति तदीयो नियोगः शब्दार्थः । तर्हि नियोगात्प्रागयं विशेषः पुरुषस्याऽवगन्तव्य इति कथं स विशेषो नियोगाद्गम्यते ? अथ फलविशेषनिमित्तको नियोगः, यागसाध्यता स्वर्गस्य विशेषः, तन्निमित्तको नियोगः शब्दार्थः । निराकरोति—नासौ प्रागसिद्धे ऽनवगते तद्भावे यागसाध्यत्वे फलस्य भवितुमर्हतीति मानान्तरेण प्राक्सिद्धतद्भावाऽपेक्षः शब्देनोच्यत इति प्रमाणान्तराऽपेक्षत्वप्रसङ्गः ।

इदमत्राऽऽकूतम् । न तावत्साध्यस्वर्गाऽविशिष्टस्य यागविषयकार्याऽवगतिर्यागस्य साध्यं स्वर्गं प्रति साधनतामाक्षेप्तुमर्हति, नियोगप्राधान्यविरोधेन प्रत्युत प्रतिक्षेपार्हत्वात् । प्रधानभूतनियोगसि-

---

१ स्वर्गोपायो मे न पु॰ पा॰ ।

**उपेयस्यैव चाऽधिकारनिमित्तत्वे जीवनादिष्वधिकाराऽभावः।**

द्युनुकूलनियोज्यसिद्ध्यर्थमनुप्रवेशात्। चिकीर्षितस्याऽपि फलस्य सा-ध्यता न नियोगरूपकार्यप्राधान्यविरोधिनी, तदर्थानप्रतीतित्वात्, किन्तु नियोगकार्ये प्राधान्याऽनुकूलतया तादर्थ्येनैवाऽवतिष्ठते। गर्भ-दासोपकारवत्, इति चेन्न। चिकीर्षिताऽचिकीर्षितसमवाये चिकीर्षि-तार्थेन चेतनव्यापारेण तदितरस्य तादर्थ्येन व्यापारात्। अप्राधा-न्यापादनेन तदनुकूलतानुपपत्तेः। तादर्थ्येन निवेशात्तदानुकूल्यमिति चेन्न। स्वभावविरोधेन तदनुपपत्तेः। न हि जातु मन्तापद्रुतस्या-पकर्तुमुपनिधीयमानो दहनस्तदनुकूलतामाचरति। न चाऽसुखम-सुखसाधनं वाऽपूर्वं चिकीर्षागोचर इत्यावेदितम्।

यत्तु गर्भदासवदित्युक्तं, तदयुक्तम्। द्वौ हि तत्र प्रयत्नौ चेतनद्वयसमवायिनौ। तत्र स्वामिनः प्रयत्नः स्वार्थमुद्दिश्य गर्भदा-सोपकाराय प्रवर्तते। गर्भदासोऽपि च स्वयोगक्षेमसमर्पितत्वा-त्तावृत्तिरिव प्रवर्तते स्वाम्यर्थे गर्भदासस्थानीयश्चायं नियोज्यः कामी नियोगं कृत्या व्याप्नुयात्। तथा च कामोद्देशेनाऽस्य कृतिः प्रवृत्ता गर्भदासस्येव स्वार्थोद्देशेन स्वाम्यर्थमिव नियोगं व्याप्नुयात्, न पुनः प्राधान्येन। न च स्वामीव चेतनान्तरमत्राऽस्ति, यत्कृतिं प्रति प्राधान्यं नियोगस्य भवेत्। तस्मात्कामो[१]पायतामात्रार्थस्य न नियोगाऽऽत्मलाभ इति साम्प्रतम्।

यदि मन्येत, नियोगनिमित्तत्वमनुपेयस्य कामस्य न सम्भ-वतीति याग प्रत्युपेय एवेत्यत आह—उपेयस्यैव चाऽधिकारनिमित्तत्वे जीवनादिष्वधिकाराऽभावप्रसङ्गः। अपि चाऽधिकारनिमित्ततां काम-स्याऽभ्युपेत्येदमुक्तम्। परमार्थतस्तु निमित्तत्वप्रतिपत्तिहेतुलिङादिश-ब्दाऽभावादयुक्तमेवैतन्निमित्तत्वं कामस्य।

१ काम्य ? पु० पा०।

**निमित्तत्वप्रतीतिहेतुशब्दाऽभावाच्चाऽयुक्तमेवैतत् । नियोज्यविशेषणमेव तु तस्मिन्सति नियोगादर्थान्निमित्त-मुच्यते । यदि च स्वर्गकामादयो निमित्तपरा न तर्हि नियोज्यपरा: । तत्राऽधिकाराऽप्रतीतेः प्रयोगाऽभावः ।**

**अथाऽर्थादधिकारसिद्धिः ? मुधा कर्तृविशेषणपक्ष-निरासः ।**

चोदयति—मा भून्निमित्तप्रतिपत्तिहेतुः शब्दो नियोज्यविशेषणमेव । तस्मिंश्च सति नियोगादर्थान्निमित्त[1]मित्युच्यते । परिहरति—यदि च स्वर्गकामादयो निमित्तपराः, न तर्हि नियोज्यपराः । च त्वर्थे पूर्वपक्षं व्यावर्तयति । उभयपरत्वे वाक्यभेदप्रसङ्गात् । तत्र निमित्तपरत्वे ऽधिकाराऽप्रतीतेः प्रयोगाऽभावः । अथ निमित्तपरादपि शब्दादापेक्षितत्वादर्थान्निमित्तवतो ऽधिकारसिद्धिः प्रतीतिः, अन्यथा ऽनुष्ठानाऽभावेन कार्यस्य तत्त्वव्याघातादिति । निराकरोति अधिकारस्य सिद्ध्यर्थं तर्हि मुधा कर्तृविशेषणपक्षनिरासः । न तावत् कर्तृविशेषणपक्षे कर्तैव क्रियाङ्गतया ऽवश्य तद्विशेषणमुपादातव्य, येन समुद्रमनोध्यानवत् फलेप्सा[2] उपादानस्य सर्वान् प्रत्यविशेषात् कर्तृविशेषो न लभ्येत, अपि तु यथा राजत्वजातिः शुचित्वादिवत्प्रयत्नाऽनिर्वर्त्यतया ऽनुपादेया[3] कर्तारमवच्छिनत्ति । "राजा राजसूयेन स्वाराज्यकामो यजेते" ति । यस्य चाऽसावनुपादेयापि राजत्वजातिरस्ति, तस्याऽर्थादधिकारो, न तु ब्राह्मणवैश्ययो, न जातिविरहिणोः । एवं फले निसर्गसुन्दरतया स्वभावादिच्छाकर्मणीच्छा पुरुषस्याऽनुपादेया ऽपि सम्भवतीति तया समुदाचरन्त्या प्रसुप्ततदवच्छिन्नेभ्यो व्यवच्छेत्तुं कर्ता चेतनान्तरेभ्यः शक्यत इति न व्यवच्छेद्याऽभावः । न च

१ तर्हि निमित्तः २ पु० पा० ।
२ फलेच्छा २ पु० पा० ।          ३ जातिरनुपादेयापि २ पु० पा० ।

यथैव हि कामितया ऽधिकारो ऽवगम्यमान उपायभूते धात्वर्थे तथा कामितया कर्तृत्वं नाऽनुपाये। यस्य च कामोपायस्तस्येदं कर्मेति अर्थात् कर्तृनियमविधेरधिकारसिद्धिः। अधिकारविधेरिव कर्तृनियमसिद्धिः। इष्टसंयुक्ते च वाक्ये इष्टार्थे ऽन्वयो न नियोगार्थे ऽन्वयः। उभयार्थे ऽन्वये वाक्यभेदात्।

ननु न विनियोगोपमर्दी नियोगः। विरोधाऽभावात्। यथाविनियोगं तत्प्रत्ययात्। तत्र परस्पराऽन्विताः

चरमया क्रियया कर्तृसङ्ख्यया वा ऽऽख्यातपदगोचरेण कर्तुरेव प्रथममुपस्थापितत्वात् कार्येण प्रथममपेक्षितत्वे ऽपि चाऽधिकारिणः साङ्गप्रयोगवचनाऽर्थीनतिरूपणत्वाद् न झगित्येव प्रतीतिरित्यपेक्षायामपि न प्रथममभिसम्बन्ध इत्यपरितुष्ट इवेदुच्यते।

एवमपि कुतः सिद्धिरधिकारिण? इत्यत आह—यथैव भवन्मते कामितया ऽधिकारो ऽवगम्यमान उपाय[1]भूते धात्वर्थे, तथा ऽस्माकमपि तथा कर्तृत्वं नाऽनुपाये। यो हि यदिच्छति स तत्करोतीति न्यायस्याऽत्रापि सम्भवात्। नन्वेवमपि कुतो ऽधिकारविशेषप्रतिलम्भ? इत्यत आह—यस्य च कामोपायस्तस्येदं कर्मेत्यर्थात् कर्तृनियमविधेरधिकारसिद्धिरस्माकं, भवतामधिकारविधेरिव कर्तृनियमसिद्धिः। दूषणान्तरमाह—इष्टसंयुक्ते च वाक्ये इष्टार्थे ऽन्वयो, न नियोगार्थे[2] ऽन्वयः। अथोभयार्थः कस्मान्न भवती? त्यत आह—उभयार्थे ऽन्वये वाक्यभेदात्। वाक्यभेदासन्यायश्च न सम्भवतीत्युक्तमधस्तात्।

सम्प्रति उत्थापाभाकरमतमुपन्यस्यति—ननु न विनियोगोपमर्दी नियोगः कुतः? विरोधाभावात्। तमेवाह—यथाविनियोग

[1] उपायभूत इ पु॰ पा। [2] इष्टार्थान्वयो न नियोगार्थे इ पु॰ पा।

पदार्था नियोगविषयतामापद्यन्ते। न चाऽन्वयो गुणप्रधानभावमन्तरेण। तत्रेष्टत्वात्स्वर्गः प्रधानं कर्म गुणत इति कर्मोपसर्जने स्वर्गकामः पुरुषो नियुज्यते इति न नियोगप्रधानता ह्रास्यते। कर्मफलसम्बन्धश्चोपपत्स्यते।

न च कामे स्वतः प्रवृत्तौ नियोज्यपुरुषः। उपायरहिते ऽर्थिनो ऽप्यप्रवृत्तेः। न च प्राङ्नियोगादुपायोपेयज्ञानम्। न खलु विनियोगनिबन्धना स्वर्गयागसंगतिरि-

तत्प्रत्ययात्। न च परस्परमनन्विता पदार्था नियोगविषयतामापद्यन्ते। न चाऽन्वयो गुणप्रधानभावमन्तरेण, तत्रेष्टत्वात् स्वर्गः प्रधानम्, कर्म गुणतः, गुणः। सार्वविभक्तिकस्तसिः इति कर्मोपसर्जनं यस्याऽस्मिन्स्वर्गे यागसाध्ये स्वर्गकामः पुरुषो नियुज्यतइति न नियोगप्रधानता तस्य ह्रास्यते, कर्म्मफलसम्बन्धश्चोपपत्स्यते। सुगमम्।

ननु यागोपसर्जने कामे न पुरुषो नियोज्यः। इच्छात एवास्य प्रवृत्तत्वात्। अप्रवृत्तप्रवर्तनात्मत्वाच्च तद्भावादित्यत आह—न च कामे स्वतः कामतः प्रवृत्तौ न नियोज्यः पुरुषः। कुतः? उपायरहिते ऽर्थिनो ऽप्यप्रवृत्तेः। सत्यामपि कामनायां प्रवृत्तिरशक्या। कामयन्तएव हि सर्वेत्रनां पुमांसो न पुनरियमनुपाया शक्यप्राप्तिरिति नास्यां प्रवर्त्तन्ते। एवमुपायज्ञानस्य पुरस्तात् काम्या अपि स्वर्गादयो न प्रवृत्तिगोचरा इति नियोगस्तदुपायमवगमयंस्तत्र प्रवर्त्तयति तदर्थिनमित्यर्थः। न च प्राङ्नियोगादुपायोपेयज्ञानम्, तस्मादेव तदवगतेरित्यर्थः।

तदेतत्स्वतन्त्रसिद्धान्ताविरोधेन दूषयति—न खलु विनियोगनिबन्धना स्वर्गयागसङ्गतिरुपायोपेयलक्षणेष्यते भवद्भिः। कुतः?

च्यते। तार्तीयी सा, नैयोगिकी त्वेषा। भावार्थश्च नियोगविषय इति प्रत्युद्धृतमेव स्यात्। निरधिकारता च स्यात्। विषयास्याऽधिकारहेतुत्वात्। विश्वजिदादौ तदकल्पनप्राप्तेः। विधेयत्वलक्षणत्वयोर्विरोधात् प्राप्त्यप्राप्तिभ्याम्।

तार्तीयी हि सा विनियोगनिबन्धना सङ्गतिर्नैयोगिकी त्वेषा बादर्येधिकरणस्य तृतीये ऽध्याये साक्षात्सङ्गतिमनिच्छता टीकाकारस्य संमतेति राद्धान्तव्याक्षेपः। अपि च सोपायफलविषयं नियोगमभ्युपगच्छत इदमपरमनिष्टमापद्यत इत्याह—भावार्थश्च केवलो नियोगविषय इति प्रत्युद्धृतमेव स्यात्। अपि च यदा फलं नियोगविषयस्तदा निरधिकारता च स्यात्। कुतः? विषयस्याऽनधिकारहेतुत्वात्। अथाऽधिकारहेतुरेव विषयः कस्मान्न भवतीत्यत आह—विश्वजिदादौ तदकल्पनप्राप्तेः। विषयस्याऽधिकारहेतोर्वेद्यमानत्वात्।

ननु प्रयोजनमेतत्, प्रमाणं तु वक्तव्यम्, तदिदमुच्यते—विधेयत्वलक्षणत्वयोर्विरोधात्। नियोगविषयः खलु विधेयः, अधिकारहेतुश्च लक्षणं, तेन हि लक्षितः पुरुषस्तदलक्षितेभ्यो[१] व्यवच्छिन्नो ऽधिकारभागी चेति। अथैतयोरेव कुतो विरोध? इत्यत आह—प्राप्त्यप्राप्तिभ्यां लक्षणस्य प्राप्तत्वात्प्रसिद्धत्वात्। अप्रसिद्धस्य तदनुपपत्तेः। अप्राप्तस्य च विधेयत्वेन विधिविषयत्वात्प्राप्तौ तदनुपपत्तेरित्यर्थः। अपि च विनियोगविषयश्चेन्नियोगः, तथा सति तद्विषयान्नियोगनिरूपणात्प्राग्विनियोगो निरूपणीयो यथा भावार्थः। नो खल्वनवगत एव भावार्थो नियोगनिरूपणाय प्रभवति। तथा च यागस्वर्गकामसम्बन्धलक्षणो विनियोगो नियोगात्प्राङ्निरूपितो

१ तदलक्षणेभ्यः च पु पा।

**कर्तृतया चाऽन्वयात्प्राङ्नियोगान्नियोज्यत्वाऽभावात् । अवश्यकर्तव्यताप्रसङ्गश्च । कामस्याऽतन्त्रत्वात् । तन्त्रत्वे ऽपीच्छाऽप्यवश्यकार्या स्यात् । तस्मात्परस्परमनन्वितयोर्नियोगाऽन्वयः । तदन्वये परस्परं वाक्यभेदात् । एकनियोगसम्बन्धादपि साध्यसाधनभावः प्रत्युक्तः ।**

विषयइति स निरूपणीयः । नियोगाऽवगमाच्च प्राक् स्वर्गकामः क्रियया संबध्यमानः कर्तृतयैव संबध्यते, पश्चात्तु नियोगप्रतीतेः नियोज्यायेति कर्तुरधिकारात् पुनरपि तद्वान्तव्याक्षेप एवेत्याह—कर्तृतया चाऽन्वया[1]त्प्राङ्नियोगान्नियोज्यत्वाऽभावात् । इदं चाऽपरमनिष्टमापद्यत इत्याह—यागावच्छिन्नविषयकर्तव्यताऽवगतेः । कर्तव्यतया च स्वविरुद्धस्वभावव्यवच्छेदादवश्यकर्तव्यताप्रसङ्गश्च सोपायस्य स्वर्गादेः ।

नन्वयं कामोपहितमर्याद. स्वर्गादिः, कामश्च नाऽवश्यंभावीति कथमवश्यकर्तव्यते?त्यत आह—कामस्याऽतन्त्रत्वात् । नियोगादवश्यकर्तव्यता, तया च स्वविरुद्धस्वाऽभावव्यवच्छेदादवश्यकर्तव्यता फलस्य प्रतीयमाना न कामनया संबन्धमर्हति नित्याऽनित्यसंयोगविरोधादिति प्रधाननियोगाऽनुरोधेनाऽतन्त्रता कामनायाः सम्भवतु, न प्रमादपाठ इत्यर्थः । अथ तु तन्त्रता ऽऽस्थेया ? तत्राह—तन्त्रत्वे ऽपीच्छा ऽप्यवश्यकार्या स्यात् । तद्विषयत्वान्नियोगस्य फलादिवत् । उपसंहरति—तस्मात्परस्परमनन्वितयोर्यागस्वर्गकामयोर्नियोगाऽन्वयः । तदन्वये च न परस्परं तन्त्रं, फलस्याऽपि साध्यतया द्वयोर्वाक्यभेदात् । एकनियोगसंबन्धादपि साध्यसाधनभावः प्रत्युक्तः । गर्भदासन्यायस्याऽसम्भवा[2]दिति भावः ।

---

१ कर्तृभावाऽन्वयात् २ पु. पा. ।  २ असम्भवः २ पु. पा. ।

ननु नियोगादस्येदमुपकारकमित्यवगम्यते, कथं तस्य कर्म स्यात्? क इवाऽस्योपकारो ऽन्यत्र काम्यात्? उपकारान्तरे ऽर्थिपदमनर्थकं स्यात्। उपकार्योपकारकत्वे तर्हि नियोगार्थः। किमतः? उपदेशकत्वं हीयते। स्थितवस्त्वनुवादात्। सापेक्षत्वं च। तस्मादस्येदं कर्तव्यमिति नियोगार्थो ऽनुष्ठानप्रतीतेः, अव्यभिचाराच्च। नैमित्तिकनिषे-

ननु मा नाम भून्नियोज्यविशेषणतया साध्यत्वेन स्वर्गस्य यागसङ्गतिः, अधिकारप्रतीतिसामर्थ्यात्तु कर्मणि स्वर्गसाधनत्वमस्य सङ्गस्यत इति चोदयति—ननु नियोगाल्लिङादेरस्य पुरुषस्येदमुपकारकं कर्मेति सिद्धमवगम्यते, गम्यतां, किमेतावता? त्याह—कथं च तस्याऽधिकारिणः कर्म स्याद्, यदि नोपकारकं कर्म। कर्म जनितमुपकारं भजमानो हि चेतनः कर्मणि स्वामितां प्रतिपद्यते नान्यथेत्यर्थः। तथाऽपि स्वर्गलक्षणस्योपकारस्य किमायात? मित्यत आह—क इवाऽस्योपकारो ऽन्यत्र काम्यादुपकारात्।

ननु जगति किमयमेवोपकारः? इत्यत आह-उपकारान्तरे कल्प्यमाने ऽर्थिपदमविवक्षितार्थं स्यात्। तथा च श्रुतहानिरश्रुतकल्पना चेति दोषद्वयमापतितमित्यर्थः। दूषयति—यदि लिङादेरस्य पुरुषस्येदमुपकारकं कर्मेति सिद्धमवगम्यते, उपकार्योपकारकत्वे तर्हि नियोगार्थो लिङर्थः। चोदकः पृच्छति—किमतः? उत्तरम्—उपदेशकत्वं प्रसिद्धं हीयते। कुतः? स्थितवस्त्वनुवादात्। ततः सापेक्षत्वं चाऽप्रामाण्यनिमित्तं मूर्द्धाभिषिक्तं प्रसज्येत। उपसंहरति—तस्मादस्येदं कर्तव्यमिति नियोगार्थो, न पुनरस्येदमुपकारकमिति। कुतः? अनुष्ठानप्रतीतेः, प्रसिद्धोपदेशभावाऽविरोधात्, अव्यभिचाराच्च। उपकार्योपकारकयोस्तु नियोगार्थत्वे व्यभिचारः स्यात्। कुतः? नैमि-

१ कथ्वाऽस्योपकार. २ पु॰ पा।

धाऽधिकारयोरुपकाराऽनाश्रयणात्। न च नियोज्यार्थ एव कर्मणि नियोगः। अत एव लौकिके चाऽध्येषणादावभावात्। ननु विशेषणं स्वर्गो नोपलक्षणम्। भवतु नियोगे ऽस्याऽन्वयः। न तु नियोग एव यागसम्बन्धं विदधाति। तथा नाम ईदृशः पुरुषो नियुज्यतइति। 'यस्या-

त्तिकनिषेधाऽधिकारयोरुपकारा.नाश्रयणात्। न चाऽपूर्वोत्पत्तिरुपकारः। तस्याऽसुखस्य हिताऽहितप्राप्तिपरिहाराऽसाधनस्याऽनुकूलवेदनीयताऽभावेनोपकाराभावाऽभावादिति भावः।

ननु 'ज्वरित' पथ्यमश्नीया'दित्यादौ नियोज्यार्थे कर्मणि नियोगो लोके दृश्यते, तदुपायत्वाच्च वेदे ऽपि नियोगविषयस्य कर्मणो नियोज्यार्थकर्मतोचितेत्यत आह—न च नियोज्यार्थ एव कर्मणि नियोगः। कस्मात्? अत एव नैमित्तिकनिषेधाऽधिकारयोर्व्यभिचारत एव। ननु लोके प्रतीतिसमर्थ्यान्नैमित्तिकनिषेधाधिकारयोरुपकारं कल्पयिष्याम इत्यत आह-लोके चाऽध्येषणादावभावान्नियोज्यार्थतायाः कर्मणः। पुनरपि स्वर्गे साध्यतायामुपलक्षणवैलक्षण्येन नियोज्यविशेषणतां प्रमाणयति—ननु विशेषणं स्वर्गो नोपलक्षणं, येनात्मानं न कार्ये निवेशयेदिति चेत्। कथं[1] न साध्यतयाऽन्वियात्? अथ नेति चेत्? कथमस्य न यागः साधनं? मित्यतः परस्परसङ्गतिः स्वर्गयागयोरित्यर्थः। परिहरति भवतु नियोगे स्वर्गाऽन्वयो, यथा ऽऽरुण्यस्य, यागस्य तु कथं? ननु नियोग एव स्वर्गसम्बन्धः स्वर्गस्य स्वविषयेण योगेन सम्बन्धं विदधाति। तथा च स्वर्गयागयोः सम्बन्धः[2] साध्यसाधनभाव इति। परिहरति—तथा च स्वर्गकामयागयोः सम्बन्धो नाम नियोगात् न तु स्वर्गयागयोः। न ह्येतावता नियोगसङ्गतिस्तयोर्न कल्प्यतइति तत्स्वरूपं दर्शयति—ईदृशः स्वर्गकामः पुरुषो ऽस्मिन्यागे नियुज्यतइति। ईदृ-

१ निवेशयतीति चेत् कथं ३ पु पा। २ सिद्ध. ३ पु पा

**ऽग्निर्गृहान्दहे'दिति यथा । नन्विष्टसिद्ध्युपायौ भावार्थे नियोगात्फलसिद्धिः स्यात् ? स्याद्यदीदृशो भावार्थः । न त्वयमेवेत्युक्तं भावना विवेके ।**

शत्वे दृष्टान्तमाह—यस्याऽग्निर्गृहान् दहेत् स यजेतेति । यथा आहिताग्नेर्गृहदाहवत स्तुते नियोगो नेष्टेर्गृहदाहं प्रति साधनता-मवगमयति, तथा स्वर्गकामस्याऽपि यागनियोगो न यागस्य तद्विशे-षण प्रति साधनभावमवगमयितुमर्हतीत्यर्थः ।

चोदयति—नन्विष्टसिद्ध्युपायौ भावार्थे नियोगात्फलसिद्धिः स्यात् । इदमभिसहितम् । यद्यपि धातुः कर्मरूपमात्र गोचरयति, पाकच्छेदादिपदेभ्यस्तन्मात्राऽवगमात् । आख्यातोपसंधानात्तु तदर्थः पूर्वाऽपरीभूतप्रचयरूपः प्रतीयते । न चैकमुपसङ्ग्राहकमन्तरेण तद्भाव इति फलमस्योपसंग्राहकम् । तदिदमाख्याततया प्रारम्भादा फलोत्पत्तेः पूर्वाऽपरीभूत समानजातीयक्रियासन्तान वा समानजाती-यक्रियासमुदायं वा ऽन्योन्यादाऽनुकूलतया भावात्मानमवच्छिन्नत्ति, पचतीत्यभिदधाति । तथा च यजेतेत्यभिमतफलावधिनि देव-तनम्मरणद्रव्याऽवमर्शनतद्विषयस्वत्वत्यागात्मनि यागकर्मणि नियो-गात्फलभेदाऽपेक्षायामधिकृतविशेषणस्याऽपि स्वर्गस्य यागसाध्यतया समन्वय इति ।

परिहरति—स्याद्यदीदृशो भावार्थः । न त्वयमेवमित्युक्तं भावनाविवेके । तादृशं चेत् कर्म नियोगविषयस्तर्हि तन्नियोगा-त्पागवगन्तव्यम् । न खल्वनवगतगोचरो नियोज्यस्तद्गोचरं नियो-गमवगन्तुमुत्सहते । न च स्वर्गाऽवधिको यागः प्राङ्नियोगाऽवग-मान्मानान्तरेण पाक इवौदनाऽवधिः शक्याऽवगमः । न च नियोगा-त्तदवगमः । परस्पराश्रयदोषप्रसक्तेः । सति नियोगाऽवगमे तद्रूप-पणं, तस्मिंस्तु सति तदवगम इति । यद्यपि यागरूपं प्रमाणान्तर-

**नैमित्तिके च फलप्रसङ्गः। यथा चाऽस्मिन्दर्शने न कर्मफलसंबन्धस्तथोक्तं भावनाविवेके । 'अतः स्वर्गयागयोरसम्बन्धान्न पुरुषार्थसाधनज्ञानम् । पुरुषार्थसाधनं च जिज्ञासन्ते प्रेक्षावन्तः । लोकाच्च शब्दार्थोऽवगमान्न नियोगप्रधानता। तत्सिद्धावनियोगात् । नापि प्रतिपत्ता प्रत्येति ताम्। विषयसिद्धावप्यननुष्ठानात् । न हि गामानयेति नियोगसिद्धिर्विवक्षिता वक्तु, रपि तु विषयसिद्धिः।**

सिद्ध, तथा ऽपि भावात्मना न तत्सिद्धम् । तेन च तद्विषयो, न पुना रूपमात्रेण । तन्मात्रेण वा विषयत्वसमर्थने नास्य स्वर्गसम्बन्धस्यादिति भावः । नैमित्तिके च फलकल्पनाप्रसङ्गः । इष्टोपाधेर्भावार्थस्य काम्यवन्नाऽप्य विशेषात् । न चाऽपूर्वमिच्छागोचर इत्यसकृदावेदितम् । यथा चाऽस्मिन् दर्शने प्रकारान्तरेणापि न कर्म्मफलसम्बन्धस्तथोक्तं भावनाविवेके ।

ननु भवत्वसम्बन्धः, का नः पीडेत्यत आह–तेन स्वर्गयागयोरसम्बन्धाद् न पुरुषार्थसाधनं ज्ञानम् । ततः किमित्याह–पुरुषार्थसाधनं च जिज्ञासन्ते प्रेक्षावन्तः ।

तदनेन प्रबन्धेन स्वर्गयागयोः परस्पराऽसङ्गतिप्रसङ्गाद् नियोगस्य कार्यता प्रतिषिद्धा। पुनस्तामेव प्रकारान्तरेण निषेधति–लोकाच्च शब्दार्थोऽधिगमाच्च नियोगप्रधानता नियोज्यकृतिं प्रति । कुतः ? तन्नियोगसिद्धावनियोगान्नियोक्तुरेव तत्सिद्धेः । नाऽपि प्रतिपत्ता प्रत्येति तां नियोक्तुर्वाक्यान्नियोगसिद्धिं स्वकृतेर्व्याप्यतया। कस्मात् ? विषयसिद्धौ सत्यामननुष्ठानान्नियोज्यस्य प्रतिपत्तुः । न ह्यन्येनाऽऽनीतायां गवीतरस्तद्दानयनमारभते। तस्माद्विषयसिद्धे।

अन्यल्लोके शब्दवृत्तमन्यद्वेदे । विवक्षापरो हि समन्वयो लोके शाब्दानां, नियोगपरो वेदे । अयमपरो गण्डस्योपरि स्फोटः । यदि खलु विवक्षापरे ऽन्वये शब्दसामर्थ्यं लोकतो ऽवगम्यते नाऽन्यपरत्वम् । अनन्यप्रमाणकत्वाच्छब्दसामर्थ्यस्य । वक्तुरभावादिति चेत् । अयमेव विवक्षापरो ऽन्वयस्तमनुमापयेदिति प्राप्तं पौरुषेयत्वम् । प्रतिपत्त्यभावो वा भवन्ती वा प्रतिपत्तिर्न शब्दनिमित्ता सा-

नियोक्तृनियोज्ययोः सम्प्रतिपत्तेः संबद्धविषयपरामेव साधनसामर्थ्यं वक्ष्यति, न तु नियोगपरामित्यर्थः ।

चोदयति–अन्यल्लोके शब्दवृत्तमन्यद्वेदे । तदेव स्फोटयति–विवक्षापरो हि समन्वयो लोके शाब्दानां पदार्थानां, नियोगपरो वेदे । तेन तत्र नियोगस्यैव कार्यतेत्यर्थः । दूषयति–अयमपरो गण्डस्योपरि स्फोटः । तमाह–यदि खलु विवक्षापरे ऽन्वये शब्दसामर्थ्यं लोकतो ऽवगम्यते ततो न विवक्षितादन्यपरत्वं वेदस्य । कस्मात् ? अनन्यप्रमाणकत्वाल्लोकप्रमाणकत्वाच्छब्दसामर्थ्यस्य नोपायान्तरं तदवगमाय वेदे सम्भवतीति । शङ्कते–वक्तुरभावान्न विवक्षासम्भवो वेद इति चेत् ? निराकरोति–अयमेव विवक्षापरो ऽन्वयस्तमनुमापयेदिति प्राप्तं पौरुषेयत्वम् । सो ऽयमस्मिन् पक्षे लोकविरोधलक्षणस्य गण्डस्योपरि पौरुषेयत्वप्रसङ्गलक्षणः स्फोटः । अथ दृढतरमपौरुषेयत्वं ततः प्रतिपत्त्यभावो वा स्फोटः । तदुपायाऽभावात् । अथ स्वाऽनुभवसिद्धा वेदवाक्यश्रवणसमनन्तरा प्रतीतिर्नाऽपन्हवमर्हति, तत्राह–भवन्ती वा प्रतिपत्तिर्न शब्दनिमित्ता सामयिकी । स्वतः सिद्धेष्वेव वेदवाक्येषु पुरुषकृतसङ्केतनिबन्धना तदुच्चारणादर्थप्रतीतिरित्यर्थः । यदि तु सम्बन्धुर-

मयिकी स्यात्, सामान्यतोदृष्टजा वा । तस्माल्लाक्षणिकप्रयोगज एव तत्रभवतो विभ्रमो नियोगः कार्य्य इति । अपि च न लोके नियोगमात्रं प्रवृत्तिहेतुः, सर्वस्य नियोगादप्रवृत्तेः । अनुविधेयनियोगाच्च तद्भावात् । अनुविधेयत्वं नियोक्तुरन्यनियोगात् प्रवृत्तिहेतुः । अनुविधानकारणं चार्थाऽनर्थप्राप्तिपरिहारादि प्रमाणान्तरसिद्धम् । न च वेदे नियोक्ताऽपि । कुतः पुनरनुविधेयः ? ननु शब्दः । भवतु नाम

स्मरणान्न सङ्केतक्रियासम्भवः, ततः सामान्यतोदृष्टरूपजा वा । गवादिपदयुक्तं हि वाक्यमर्थविशेषप्रत्ययनिमित्तमुपलब्धं, वैदिकं च तथेति तदपि प्रत्यायकमिति सामान्यतोदृष्टादर्थप्रत्ययो वैदिकादपि वाक्यादित्यर्थः ।

यत्तु नियोगकर्त्तव्यतायामाचार्यनियोगः कर्तव्यो, राजशासनमनुष्ठेयमिति लौकिको व्यपदेशः प्रमाणमुपन्यस्तं, तदुपहसन्नन्यथासिद्धयति—तस्माल्लाक्षणिकप्रयोगप्रभव एव तत्रभवतो विभ्रमो नियोगः कार्य इति । नियोगशब्देन स्वाऽभिधेयविषयभावार्थलक्षणादिति पूर्वार्द्धं व्याख्याय कारिकायाः पश्चार्द्धं व्याचष्टे । अपि च न लोके नियोगमात्रं प्रवृत्तिहेतुः । कुतः ? सर्वस्य नियोगादप्रवृत्तेः । अनुविधेयनियोगाच्च तत्प्रवृत्तिभावात् । तस्मादनुविधेयत्वं नियोक्तुरन्यनियोगात्प्रवृत्तिहेतुः । अनुविधानकारणं चार्थाऽनर्थप्राप्तिपरिहारादि प्रमाणान्तरसिद्धम् । वेदे ऽप्यनुविधेयो ऽस्तु लोकवदिति चेत् । अत आह—न च वेदे ऽपौरुषेये ऽपि नियोक्ता ऽपि दृश्यते । कुतः पुनरयमनुविधेयः ? धर्मस्याऽत्यन्ताऽसिद्धेरित्यर्थः ।

चोदयति—ननु शब्दो नियोक्ता ऽनुविधेयः । शब्दनियोक्तृत्वं न्यरासि प्रथममेव प्रमाणत्वादित्यादिना । अभ्युपगम्याप्याह—भवतु नाम नियोक्ता, न त्वनुविधेयः । अनुविधानहेत्वभावात् । नन्वर्था-

**नियोक्ता, न त्वनुविधेयः। हेत्वभावात्। न ह्यर्थाऽनर्थप्राप्तिपरिहारयोः शब्दाऽनुविधाने प्रमाणमस्ति। नियोग इति चेत्। न। तस्य प्रमेयत्वात्। नियोगज्ञानं तर्हि। न। तस्य नियोगविषयत्वात्। तस्य च ताभ्यामन्यत्वात्। न चाऽर्थादाक्षेपः। अनाप्तनियोगदर्शनात्। क्षेम्यो ऽयं पन्थाः, गच्छतु भवाननेनैवेति यथा। पदार्थाऽन्वयनिष्ठो नियोगो लोके-**

ऽनर्थप्राप्तिपरिहाराववनुविधानकारणं भविष्यतीत्यत आह—न ह्यर्थानर्थप्राप्तिपरिहारयो. शब्दाऽनुविधाने प्रमाणमस्ति। शङ्कते—शब्दाऽनुविधाने सत्यनुविधातुः पुरुषस्य हितप्राप्तिरहितनिवृत्तिश्च भवतीत्यत्र नियोगः प्रमाणमिति चेत्। निराकरोति—न। तस्य नियोगस्य प्रमेयत्वात्। न खलु प्रमेय तत्त्वेन प्रमाणं भवतीति। पुनः शङ्कते—यदि प्रमेयतया नियोगो न प्रमाणं, नियोगज्ञानं तर्हि प्रमाणमस्तु। निराकरोति—न। तस्य नियोगविषयत्वात्। तस्य च नियोगस्य ताभ्यामर्थाऽनर्थप्राप्तिपरिहाराभ्यामन्यत्वात्।

यदि मन्येत, मा नाम भून्नियोगः। प्रमेयतया ऽर्थानर्थप्राप्तिपरिहारयोः प्रमाणं शब्दावगतेस्स्वयं चेतनप्रवृत्तिं विना ऽनुपपद्यमानस्तस्याश्चार्थाऽनर्थप्राप्तिपरिहारमन्तरेणाऽसम्भवात् प्रवृत्तिमर्थानर्थप्राप्तिपरिहारप्रयोजनमाक्षेप्स्यते च तदपेक्षया प्रमेयमपि प्रमाणतां, कारकशब्दानामापेक्षिकप्रवृत्तित्वादित्यत आह—न चाऽर्थादाक्षेपः। कुतः? हिताऽहितप्राप्तिपरिहाररहितस्याऽनाप्तनियोगस्य दर्शनात्। अथ यदेव सुपन्थानमाख्याय तत्र प्रवर्तयत्यनाप्तः क्षेम्यो ऽयं पन्थाः, गच्छतु भवाननेनेति यथा। चोदयति—पदार्थाऽन्वयनिष्ठो ऽर्थाऽनर्थप्राप्तिपरिहारोपायतालक्षणसमन्वयनिष्ठो नियोगो लिङादिर्नियुज्यते ऽनेनेति व्युत्पत्त्या लोके तस्य साध्यसाधनभावस्य प्रमाणत्व-

तस्य च प्रमाणान्तरविषयत्वात्तदपेक्षत्वात्तन्निबन्धना प्रवृत्तिर्लोके, नियोगनिष्ठस्तु वेदे, अतो नाऽन्याऽपेक्षा । उक्तोत्तरमेतत् । अपि च न नियोगमात्रं प्रवृत्तिहेतुः । मिथ्या तर्हि नियोगज्ञानम् । न च तद्युक्तम् । कारणद्वयाऽभावात् । न वयं नियोगमवजानीमहे येन मिथ्यात्वं स्यात् । सत्यपि तस्मिन्पुरुषः प्रवर्तते लोकइव यस्य कस्य चिन्नियोगात् । न हि तत्र नियोगो नास्ति । अतत्परत्वे तात्पर्यमप्रमाणक-

रविषयत्वात् । प्रमाणान्तराऽपेक्षत्वात्तन्निबन्धना साध्यसाधनभावाऽवगमनिबन्धना प्रवृत्तिर्लोके । अनाप्तवाक्ये च नियोगस्य मानान्तरेण बाधितत्वादप्रवृत्तिः । मानान्तराऽगोचरनियोगनिष्ठस्तु पदार्थान्वयो वेदे । स च प्रतीतः प्रवृत्तौ हिताऽहितप्राप्तिपरिहारसाधनतामनुवि ‹ ानकारणं नाऽपेक्षते । प्रवर्त्तनैकरसत्वात् । अतो नाऽन्याऽपेक्षा । न हि प्रमाणं शब्दस्तदवबोधने मानान्तरमपेक्षते । नाऽपि नियोगः पुरुषप्रवृत्तौ हिताऽहितप्राप्तिपरिहारसाधनतामित्यर्थः । तदेतद् दूषयति—उक्तोत्तरमेतत् । विवक्षापरत्वनिराकरणप्रस्तावे ।

यत्तु प्रवर्त्तनैकरसत्वमभिमतं नियोगस्य, तदपि न मृष्यामह इत्याह—अपि च लौकिको भवतु, अलौकिको वा, सर्वथा नियोग इत्येव न नियोगमात्र प्रवृत्तिहेतुः । चोदयति—न चेत्प्रवर्त्तयति, मिथ्या तर्हि नियोगज्ञानम् । न चैतदुचितं, कारणद्वयाऽभावात् । परिहरति—न वयं नियोगमवजानीमहे, येन मिथ्यात्वं वेदस्य स्यात् । सत्यपि तस्मिन्पुरुषप्रवृत्तिर्लोकइव यस्य कस्य चिन्नियोगात् । न हि तत्र नियोगो नास्ति । अथ न तन्नियोगपरं लौकिकमपि तु विनियोगपरमित्यत आह—अतत्परत्वे नियोगपरत्वे-लौकिकस्य लोकाऽधीनाऽवधारणार्थस्य[1] वैदिकस्य तात्पर्ये नियोगपरत्वमप्रामाणिकमित्युक्तम् ।

---

१ अर्थाऽवधारणस्य २ पु॰ पा॰ ।

श्यन्ते । अर्थस्तर्हि प्रवर्त्तकः । सत्यं, शब्दो ऽपि, तत्प्रतिपादनात् । कथं तर्ह्यङ्गोपदेशः ? अपेक्षितो ह्यर्थः पुरुषार्थः । अन्यथा ग्रामादिरपि न तथा स्यात् । अपेक्षितस्योपदिष्टसाधनाऽनुग्रहः । ननु लिङादिभ्यः प्रवर्त्तना ऽवगम्यते । पराहतं चेदम् उपदेशो नियोज्यार्थकममोतश्चित्तचोदनो न शब्द इति चोदनालक्षणो ऽर्थो धर्म इति शास्त्रकृद्वचनव्याघात' प्रसज्यतेत्याह—अर्थस्तर्हि प्रवर्तक ।

परिहरति—सत्यं, शब्दोऽपि प्रवर्तकस्तत्प्रतिपादनात् । अयमभिसन्धि । न तावत्साक्षादपेक्षितोपायता ऽपि प्रवृत्तिहेतुस्तस्याः प्रवृत्ते. प्रागभावादपि तु स्वज्ञानेन प्रवर्तयतीति तच्च शब्दनैव जन्यत इति यथा ऽर्थस्तद्विषयत्वात्प्रवर्तकस्तथा शब्दो ऽपि तज्जनकत्वादित्यविशेष । तथा च न व्याघात । एतेन पूर्वार्धे कारिकाया व्याख्यातम् । अत्र च पुरुषार्थस्येति पुरुषो नियोज्यो ऽभिमत: शुद्धस्येति नियोज्यार्थस्यैव न नियोक्त्रर्थस्येत्यर्थ. । ननु यदि पुरुषार्थोपायाऽभिधायी शब्द उपदेशः, कथं तर्ह्यङ्गोपदेशः ? न ह्यङ्गानि पुरुषार्थसाधनानि, अपि तु क्रत्वर्थानि । परिहरति—अपेक्षितो ह्यर्थो ऽत्र पुरुषार्थो, न हि जात्या कश्चित्पुरुषार्थो व्यवस्थित । अन्यथा ग्रामादिरपि न तथा स्यात् । तस्यापि स्वयमसुखत्वात् कदाचित्कथं चिदिष्यमाणत्वाच्चेन्न तर्हि जात्या पुरुषार्थत्वम् । यथाह न्यायवादी 'सोयं प्रायशो ऽपरिसङ्ख्येय प्राणभृद्भेदस्याऽपरिसङ्ख्येयत्वा'दिति । न चाङ्गकार्यं प्रति जात्यैवाऽपेक्षा नास्ति पुरुषाणामित्याह—अपेक्षितस्योपदिष्टसाधनस्य श्रेय.साधनाऽनुग्रह । अननुग्रहे साधनवैगुण्येन श्रेयसो ऽजननात् ।

अत्र चोदयति—ननु लिङादिभ्यः प्रवर्तना ऽवगम्यते । अन्यथा तच्छ्रावित्त प्रवृत्त्यनुपपत्ते. । न पुनः पुरुषार्थोपायता । न

१ ग्रामादि २ पु' पा ।

नेति । नेदं पराहतम्[1] । तथा हि–

पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥

प्रवृत्तिसमर्थो हि कश्चिद्भावाऽतिशयो व्यापाराऽभिधानः प्रवर्त्तना । सा च क्रियाणामपेक्षितोपायतैव । न हि खलु भूतार्थप्रतीतिः प्रवृत्तिहेतुः । पराहतं चेदमुपदेशो नियोज्यार्थकर्माऽऽस्थिप्रचोदनेति । यदि हि नियोज्यप्रयोजनं कर्मभूतमाहुः कथमसावप्रवृत्तप्रवृत्तना ? सेयं पराहतिः । नेदं पराहतं पराहतिपरिहारेण सर्वं परिहृतं भवतीत्याशयः । कुतः ? तथा हि ।

पुंसो नेष्टाऽभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः ।

प्रेक्षावतां हि कायवचनचेष्टा प्रयत्नपूर्विके, प्रयत्नश्च रागपूर्वः, सुखानुशयी च रागो न दुःखे नाप्यसुखे[2] भवितुमर्हति, द्वेषादुपेक्षणाच्च । क्रिया च दुःखेत्यनुभवो लोकस्य । सा यदि सुखसाधनमपि न स्यान्नाऽस्यां सुखार्थिनः प्रवर्तेरन् । न चैते तपायाः साक्षात् सुखे प्रवर्तितुमीशते इति प्रेक्षावद्व्यापारोपरमप्रसङ्गः । तस्माद् दुःखरूपासु क्रियासु सुखसाधनतैवेच्छोपहारमुखेन प्रवर्तयति । स्वविज्ञानेन चाऽसाविच्छा प्रवृत्तिहेतुमुपहरतीत्युक्तम् । यदि पुनः शब्दः सुखसाधनतां न प्रतिपादयेन्न क्रियायां पुरुषं प्रवर्तयेत् । ननु तथापीष्टसाधनतामात्रं शब्देन प्रतिपादितं, कुतः पुनरत्र प्रवर्तनाप्रत्ययः ? इत्यत आह–

प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥

तद्व्याचष्टे–प्रवृत्तिसमर्थो हि कश्चिद्भावाऽतिशयो व्यापाराऽभिधानः प्रवर्तना । अयमर्थः । न वयं परिस्पन्दमेवैकं व्यापारमाचक्ष्महे, येनाऽस्पन्दनात्मनः समीहितसाधनताया अप्रवर्तनात्मत्वेन पर्यनुयुज्येमहि, अपि तु भावधर्म एव कश्चित्समीहितसाधनाऽनु-

1 परिहृतम् म पु॰ पा॰ । 2 असुखदुःखे॰ १ पु पा ।

**तथात्वमप्रतिपद्य तत्र प्रवर्त्तते कश्चित्। याप्याज्ञा[1]दिभ्यः प्रवृत्तिः सापि कथं चिदपेक्षितनिबन्धनत्वमुपाश्रित्यैव। अन्यथा ऽभावात्। ननु कर्त्तव्यमिति प्रतिपत्तेः प्रवृत्तिः।**

गुणो व्यापारपदार्थः। तद्यथा आत्मनो बुद्ध्यादिजननप्रवृत्तस्य मनःसंयोग एवाऽय भावधर्मः[2]। तद्वदत्रापि स्पन्दस्तदितरो वा भावधर्मः प्रवृत्तिजननाऽनुकूलतया व्यापारविशेषः प्रवर्तना। न चाऽसौ शब्दस्तद्भावना चेत्याह—सा च क्रियाणामपेक्षितोपायतैव। कुतः? न हि तथात्वमपेक्षितोपायत्वमप्रतिपद्य तत्र क्रियासु प्रवर्तते कश्चित्। नन्वनपेक्षितोपाये ऽप्याज्ञया राज्ञः प्रवर्तन्ते प्रेक्षावन्त इति कथमपेक्षितोपायतैव प्रवृत्तिहेतु? रित्यत आह—याप्याज्ञादिभ्यः प्रवृत्तिः सा ऽपि कथ चिदपेक्षितनिबन्धनतामुपाश्रित्यैव। यद्यप्याज्ञादयो नियोक्त्रर्थकर्मोणास्तथापि तद्विषयसंपादनस्य कथ चिन्नियोज्याऽपेक्षितनिबन्धनत्वमप्यस्ति। तथा हि। तत्संपादनपरितोषित आज्ञापयिता समीहितमस्मै प्रयच्छति अहित वा न विधत्ते। तदिदमपेक्षितमुपाश्रित्य भृत्यस्य प्रवृत्ति। कुतः पुनरेतत्? दित्याह—अन्यथा तदनुपाश्रये प्रवृत्तेरभावात्। न खलु यस्य यो न हिताऽहितप्राप्तिपरिहाराभ्यां यतते स तदाज्ञामनुरुध्यते। न चैतावतोपदेशस्याऽऽज्ञादिभिरविशेषस्तेषां नियोजकाऽर्थसमुद्देशेन प्रवृत्तेरानुषङ्गिकत्वान्नियोज्यार्थस्योपदेशस्य तद्विपरीत्यात्। तस्माल्लिङादिभ्यः प्रवर्तनाऽवगतिरुपपन्ना ऽनुपपन्ना च पराहृतिरिति।

अत्र केचिदाम्नायं प्रति प्राद्रुमानिनः प्राहुः। ननु कर्तव्यमिति प्रतिपत्तेः प्रवृत्तिः। इदमाकूतम्। कार्यदर्शनोन्नेयव्यावृत्तयः खल्वमी लिङादयः। कार्यं च प्रवृत्तिलक्षणं वृद्धानां लिङादिश्रवणसमनन्तरमुपलभ्यते। तच्च बुद्धिपूर्वकं, स्वतन्त्रप्रवृत्तित्वात् अस्मत्प्रवृत्तिवत्। अनुमिता च बुद्धिरस्मत्प्रवृत्तिहेतुत्वाद्गोचरत्वाविषी

१ यद्यप्याज्ञा मु पु। २ संयोगस्तत एवाऽयं धर्म = पु पा।

**कथं हि तथा प्रतिपद्यमानो न प्रवर्तेत ? यो हि स्वर्णमुपल-**

प्रवृत्तिहेतुबुद्धित्वात् अस्मत्प्रवृत्तिहेतुबुद्धिवदिति । तस्याश्च विषयं स्वयमेव चक्षुरुन्मील्य पिपिडकरोग[1] परित्यज्य पर्यालोचयन्तः शब्दव्यापारमुत्प्रेक्षयतत्समीहितसाधनताव्युदासेन कर्तव्यतामेव प्रतिपद्यामहे । तथा हि । स्तनपानादावपि न जातु समीहितोपाय इत्येव प्रवृत्ताः स्म, किं तु कर्तव्यमेतदिति । अतीते वर्तमाने ऽनागते च समुद्रविदाख्याते एतत्ते भवितेतिवत्कर्तव्यतात्मना प्रवृत्तेः । तदवगमे च तदात्मनि प्रवृत्तेः कर्तव्यतैव प्रवृत्तिहेतुरिति लिङादिश्रवणाऽनन्तरा प्रवृत्तिं कर्तव्यताऽभिधानमेव लिङादीनामापादयति । तथा च विदितसङ्गतितया लिङादयो वेदे ऽपि तामेवाऽभिदधते । एतावांस्तु भेदो लौकिकवचस प्रमाणान्तराऽपेक्षप्रवृत्तित्वादपेक्षितोपायताप्रतीतिपुरःसरत्वाच्च दुःखरूपक्रियाकर्तव्यताऽवगतिरपेक्षितोपायता तत्प्रमाणभूतामन्तर्भाव्य कर्तव्यताऽवगतिः । अपौरुषेयस्तु वेदो न स्वार्थे प्रमाणान्तरमपेक्षत इत्यपेक्षितोपायताऽवगमनिरपेक्ष एव कर्तव्यताऽवगमहेतुः । तथा च सा वेदादवगम्यमाना ऽनुष्ठातारमधिकारिणं नियोज्यमपेक्षते, न पुनः साध्यमस्या एव, तादूप्यात् । नियोज्यश्च यत्र साध्यविशिष्टो भवेत् तत्र साध्यविवृद्धिर्यथा स्वर्गकामो यजेतेति । यत्र त्वसौ निमित्तवान्यथा यावज्जीवमिति निषिध्यमानक्रियाकर्ता वा यथा न कलञ्जं भक्षयेदिति तत्र भगवानाम्नाय एव निरस्ताऽखिलदोषाशङ्को भावार्थविषयं नञर्थविषयं वा कार्यं हिताऽहितसाधनताऽवगमनिरपेक्षो ऽवगमयन्प्रवृत्तिं निवृत्तिं वा विधत्त इति किमपेक्षितोपायतये[2]ति ।

नन्वपेक्षितोपायतामन्तरेण कर्तव्यमिति शतशो ऽप्यभिधीयमानं न प्रवृत्तये कल्पत इत्यत आह—कथं हि तथा प्रतिपद्य-

---

१ चक्षुषी निमील्य हिरिकडरोगम् । २ पु. पा. ।

भ्य मृत्तिकेत्याह कस्तस्योत्तरं दद्यात् ? कः पुनरयमर्थः कर्त्तव्यमिति ? न कश्चित् । प्रतिभा । का पुनरियम् ? नियतसाधनाऽवच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञा । प्रतिभाक्रियमाणो न प्रवर्त्तेत ? शब्दस्तावत्कर्त्तव्यतायां विदितसङ्गतिस्तामवगमयति । तथा नैमित्तिकनिषेधाऽधिकारयोरपि प्रतीयमाना न शक्या नेति वक्तुम् । न चाऽपेक्षितोपायतानिवृत्तौ तस्या अपि निवृत्तिरिति साम्प्रतम् । सा हि तस्या न प्रमाणम् । न चैकप्रमाणनिवृत्तौ प्रमाणान्तरेण प्रतीयमानं तदेव निवर्त्तितुमर्हति । न हि समनसे द्रव्य चक्षुषा न गृह्यते इति न त्वचा व्यवस्थाप्यते । न च निमित्तान्तरं नैमित्तिकाऽपूर्वं न कर्तव्य प्रेक्षावता । असुखत्वे सति हिताऽहितप्राप्तिपरिहाराऽनुपायत्वात् काकदन्तपरीक्षावदित्यनुमानं च सम्भवति । आम्नायजन्मना कर्त्तव्यताबोधेन बाधितविषयत्वात् । तदाह—यो हि स्वर्गमुपलभ्य मृत्तिकेत्याह कस्तस्योत्तरं दद्यात् ? तस्मादनपेक्षादाम्नायात् कर्त्तव्यताऽवगताऽनुष्ठान[1]माक्षिपत्येव । अन्यथा तत्त्वाऽनुपपत्तेः । तस्यास्तन्नान्तरीयकत्वात् । तस्मात्सूक्तं कथं हि तथा प्रतिपद्यमानो न प्रवर्त्तेत ।

ननु यदि हितसाधनता कर्तव्यता तर्हि तदर्थतत्त्वं वाच्यम्, न च तदस्तीत्याशयवान्सिद्धान्ती पृच्छति—कः पुनरयमर्थः कर्तव्यमिति । तत्रान्तरे पूर्वपक्ष्येकदेशी प्राह—न कश्चित् । नन्वेवमसदर्थो कर्त्तव्यतावगतिरप्रमाणम् । अप्रमाणं च न व्यवहाराय कल्पत इत्याह—प्रतिभा । ननु व्यभिचारादर्थमनिश्चयात्मकमनैकान्तिकलिङ्गप्रसूतं संवेदनं प्रतिभेति प्रतिभाविदः । न चाऽनिश्चयात्मकं विज्ञानं व्यवहाराङ्गं भवतीत्याशयवानाह—का पुनरियम् ? एकदेशिन उत्तर—नियतसाधनाऽवच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञेति । न हि ते प्रतिभाविदः, ये संवेदनमनिश्चयात्मकं प्रतिभामाचक्षुः ।

---

१ कर्तव्यताऽनुष्ठानं २ पु पा ।

**याविषयत्वे हि क्रियाप्रतीतिः स्यात् । सा च प्रवृत्तिहेतुः । अप्रमाणं न व्यवहाराङ्गम् । संशयविपर्ययौ हि तथा । न हीदमित्थमनेन कर्तव्यमिति अनुपजातप्रतिभाभेदः प्रवर्तते प्रत्यक्षाद्यवगतेऽप्यर्थे । तत्र हि प्रमाणकार्यसं-**

संशयो हि सः । इयं तु साध्यसाधनेतिकर्तव्यताऽवच्छिन्नायाः क्रियायाः प्रतिपत्तावनुकूला तत्प्रतिपत्त्या कार्येऽनुष्ठानलक्षणे कर्तव्ये सहकारिणी कर्तव्यमिति प्रज्ञा प्रतिभामध्यगीष्महि । एवं तर्हि क्रियैवाऽस्या विषय इति न निर्विषयेत्यत आह—प्रतिभाक्रियाविषयत्वे हि क्रियाप्रतीतिः स्यात् । सा च त्रैकाल्यावच्छिन्नक्रियागोचरा । यथा पचति पक्ष्यत्यपाक्षीदिति । इयं पुनरतीताऽनागतवर्तमानानामन्यतमेनाप्यनवच्छिन्नमद्भुतार्थमिव प्रतिभासयन्ती प्रज्ञा । न पुनरस्याः परमार्थसद्विषयः, कालत्रयरहितत्वात् खपुष्पवत् । न खलु कुर्यादिति वर्तमानाऽस्याः, करोतीत्यविशेषप्रसङ्गात् । नाऽनागता, करिष्यामीति । नाऽतीता, अकार्षमिति । तदेषा न प्रमाणम् । असद्विषयत्वान्न संशयः । एकान्ताऽवसायान्न विपर्ययः । सर्वथा एवमेव व्यवहारदर्शनात् । अत एव चित्तवृत्तिं तामिमामाचक्षते विकल्परूपामाचार्याः 'शब्दज्ञानाऽनुपाती वस्तुशून्यो विकल्प' इति वदन्तः ।

ननूक्तमप्रमाणं प्रतिभा कथं व्यवहारं प्रवर्तयेदिति, अत आह—सा च प्रवृत्तिहेतुः । कुत एतदप्रमाणं न व्यवहाराङ्गमिति । संशयविपर्ययौ हि तथा । प्रतिभा पुनस्ताभ्यामन्या व्यवहारं प्रवर्तयतीत्यभिप्रायः । तत्किमन्वयमात्रेण प्रवृत्तिहेतुः नैवमिति, तदन्वयव्यतिरेकाऽनुविधानात्प्रवृत्तिभावाऽभावयोः । तत्र व्यतिरेकं तावदाह—न हीदमित्थमनेन कर्तव्यमित्यनुपजातप्रतिभाभेदः प्रवर्तते प्रत्यक्षाऽद्यवगतेऽप्यर्थे । ननु प्रत्यक्षादेरेव हानोपादानोपेक्षाः फलमिति

**मासिः । प्रतिभानेभ्यो हि लोक इतिकर्तव्यतास समीहते । किं पुनरस्या निमित्तम् ? शब्दः । तत्र व्युत्पन्नानां साक्षाद्भावनामुखेन वा ऽप्रसिद्धशब्दनिबन्धनव्यवहाराणां बालादीनामनादिशब्दभावना । अन्यथा आद्यकरणविन्यासाद्यसम्भवात् । यथोक्तम् ।**

किमर्थं प्रतिभेत्यत आह—तत्र हि प्रमाणकार्यसमाप्तिः । प्रमाणाना हानादिलक्षणं कार्यं तत्प्रतिभाभेदे सति समाप्यते नान्यथा । तेन हानादिक्रियासु प्रवृत्तानि प्रत्यक्षादीनि काष्ठानीव पाके ज्वलनं प्रतिभारूपमपेक्षमाणान्यपि नाऽकारणमित्युक्तं भवति । अन्वयमिदानीमाह—प्रतिभानेभ्यो हि लोक इतिकर्तव्यतासु समीहते । इतिकर्तव्यतास्वनुष्ठानेषु कायवचनचेष्टासु समीहते प्रयतते कार्यमिति प्रतिभामात्रेणो हि लोक इत्यर्थः । तदनेन क्रियाप्रतिपत्तावानुकूल्यं प्रतिभासु दर्शितम् । नन्वयं विकल्पः, स च शब्दज्ञानानुपातीति तद्विद । न च प्रतिभा शाब्दज्ञानमनुपतति । बालादीनां तदभावेन तदनुत्पादादप्रवृत्तिप्रसङ्गात् । तस्मान्निमित्तान्तरं वाच्यम्, न च तदस्तीत्याशयवानाह—किं पुनरस्या निमित्तम् ? उत्तरं—शब्द[1] । तत्र ये तावद् व्युत्पन्नास्तेषां प्रतिभायाः साक्षाद्भावनामुखेन वा ऽप्रसिद्धशब्दनिबन्धनव्यवहाराणां बालादीनाम् ।

नन्विह पटुभ्यासाऽऽदरप्रत्ययोनिर्भावनानां ऽसति पूर्वाऽनुभवे भवितुमर्हति, अनुभवो ऽप्यविदितसम्बन्धशब्दविज्ञानजन्मा नास्ति । नाऽस्मिन् जन्मनि बालादीनां प्राग्भवीया तु भावना सर्वसंस्कारच्छेद[ ]प्रायणात् ध्वंसते स्मेति न सम्प्रतितनीं प्रतिभां भावयेत्, भावने वा जात्यन्धबधिरादयस्तज्जन्माऽननुभूतानिव जन्मान्तराऽनुभूतान् रूपशब्दादीनपि व्याचक्षीरन्नित्यत आह—अनादिशब्दभावना ऽवश्याऽभ्युपेतव्या । कुतः ? आद्यकरणविन्यासादीनामन्यथा ऽसम्भवात् । यथोक्तं प्रतिभाविद्भिः ।

---

१ निमित्तं शब्द इ पु. पा ।

आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्॥

विच्छिन्नप्रतीतीनामपि च पदार्थानां किं कथमनुसन्धीयेम, विचारविकल्पाऽप्रत्यवमृष्टपूर्वशक्तिः समाविष्टपूर्वशक्तिप्रतिभासेवोपदीयमानोपश्लेषं विदधाति। ता-

आद्यः करण[1]विन्यासः प्राणस्योर्ध्वं समीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्॥

जातमात्रः खल्वयं बालकः पिबा मुखहृते मधुसर्पिषी जिह्वया लेढि, सोऽयमाद्यः करणविन्यासः। प्राणश्चोर्ध्वं समीरयति यङ्कसनीत्युच्यते। अपि चोदीरितेन वायुना हृदयादीनि स्थानान्यभिहन्ति यतः शब्दभेद आविरस्ति। तदेतत्सर्वं प्राग्भवीयशब्दभावनाविजृम्भितम्। अत्र प्रयोगः, बालानामेवंविधा चेष्टा कर्तव्यताऽवगतिपूर्विका स्वतन्त्रचेतनप्रवृत्तित्वाद्या या स्वतन्त्रचेतनप्रवृत्तिः सा सा कर्तव्यताऽवगतिपूर्विका यथाऽस्मदादीनाम्। तथा विवादाध्यासिता कर्तव्यताऽवगतिः शब्दयोनिः कर्तव्यताऽऽकारत्वात् यो य एवमाकारः स सर्वः शब्दयोनिर्यथाऽस्मदादीनाम्। स च शब्दः साक्षादनुपलभ्यमानो भावनामुखेनाऽधिकरणसिद्धान्तन्यायेन कारणभावमापद्यते। भावना च यथाकार्यदर्शनोन्नेया यावत्कार्यदर्शनव्यवस्थाप्यरति न जात्यन्धबधिरादीनां जन्मान्तराऽनुभूतरूपादिव्याख्यानप्रसङ्गः।

व्युत्पन्नानामपि शब्दभावनायोनिरस्ति प्रतिभेत्याह—विच्छिन्नप्रतिपत्तीनामपि च पदार्थानां किं कथमनुसन्धीयतश्चेति विचारकल्पनाप्रत्यवमृष्टपूर्वशक्तिः समाविष्टपूर्वशक्तिप्रत्यवभासेवोदीयमानोपश्लेषं विदधाति। अयमर्थः। सतापतप्ततनवो हि मीनजलदर्शनमात्रादम्भसि मज्जनः प्रवर्तन्ते, नान्तरा विचारयन्ति। दृश्यमानजलदगता

---

[1] कारण इ पु पा०।

आपस्तापमपनेतु समर्था' इति शिशिरभावे तोयत्वादयतोऽत्र शिशिरतरत्वसिद्धे तापाऽपनोदनसमर्थं यथा गाङ्गं तोयम्, एवं च तप्तास्त्वदिह तत्प्रशमनाय निमज्जाम इति । नाना चैतेषां परस्परोपश्लेषमन्तरेण कर्तव्यता । न चास्यामसत्यां स्वतन्त्रचेतनप्रवृत्तिः । न चोपश्लेषे समुदाचरद्वृत्ति किञ्चित्प्रमाणमस्ति । तस्मादसंवेदितरूपा शब्दभावनेव इदमित्थमनेन कर्तव्यमिति प्रतिभाहेतुरास्थेयः । न चैवं वाच्यं, प्राग्भवीयं तज्जन्मजं वा यच्च यत् प्रतिभाति तच्च तद्भावनाबीजमस्तु, किं शब्देनेति । आनुमानिकेऽनुभवजन्मनो भावनाया भूतार्थगोचरत्वेन कर्तव्यताऽऽकारप्रतीत्यकारणत्वात् । कर्तव्यताकाररहितस्य चाऽर्थोपश्लेषमात्रस्य प्रतीतेः । अत्र किं कथमनुसन्धीयते इति विचारविकलेति अनुमानबीजभूतानां धर्मिस्वरूपदर्शनतद्धर्मसन्देहजिज्ञासाप्रत्यक्षहेतुधर्मपरामर्शप्रमाणान्तराबाधानामभावं सूचयति । अप्रत्यक्षमूर्ध्वपूर्वशक्तिरिति व्याप्तिस्मरणाऽभावमाह । न जातु गृहीतव्याप्तिरपि तस्याः स्मरन्ननुमातुमर्हतीति ।

ननु न यदि पूर्वशक्तिपरामर्शः किमिति तादृश शिशिरह्रदाऽवगाहने प्रवर्तते न दहनज्वालाकलापाऽऽलिङ्गने ? एतन्निराकरोति - समाविष्टपूर्वशक्तिप्रत्यवभासा नेदमनुमानं येन पूर्वशक्तिपरामर्शमपेक्षते, अपि तु स्वकारणात्पूर्वशक्त्याकारोपजायमाना क्व चित्प्रवर्तयति क्व चिन्न । ननु यदि पूर्वशक्त्यवभासा प्रतिभा तर्हि पूर्वैव शक्तिरस्या विषय इति न निर्विषयेति, एतन्निराकरोति—इयेति । न तु सैव । तथा हि । कर्तव्यतावभासा प्रतिभा पूर्वशक्तिमपि तदवच्छेदकतया गोचरयति, कर्तव्यता च न परमार्थसतीति तदवच्छेदेन प्रतिभारूढेनात्मना शक्तिरप्यवस्तुसती । स्वरूपेण तु सत्त्वमप्रयोजकं प्रतिभायामनारोहात् । सेयमेवंविधा प्रतिभा भावानामुपश्लेषं विदधाति । कुतः ? तादर्थ्यात्प्रवृत्त्यर्थत्वादस्याः ।

ननु भवतु प्रवृत्त्यर्था भावना, उपश्लेषविधानादित्यत आह—

दर्शादनुपश्लेषे तदभावात्। दुर्ज्ञानोपायेषु च प्राज्ञैरपि स्वरविशेषाश्रयभेदेषु पक्षिणां पूर्वशब्दभावनाऽनुगमात्प्रत्युत्पन्नशब्दव्यापारा[1] प्रतिभा प्रवृत्तिनिबन्धनं, नोपायज्ञानम्। उपदेशाऽसकृद्दर्शनयोरभावात्। आहारविशेषप्रतिपत्तिश्च तज्जातीयानामविदितप्रीत्युपायत्वेन प्रथमज्ञाननिबन्धना न भवेत्। जातिभेदाऽभिव्यक्तप्रतिभाभेऽनुपश्लेषे तदभावात्। विशिष्टार्थप्रतिपत्तिनिबन्धनो व्यवहारोऽनवच्छिन्नप्रतिपत्तिपदार्थमात्रान्नात्यनुमर्हतीत्यर्थः। अपि च यत्प्राज्ञानामपि प्रमाणैरेकान्तदुष्करं तन्मन्दधियामपि पक्षिणां प्रत्युत्पन्नशब्दव्यापाराभावेऽपि पूर्वशब्दभावनाऽनुगमलब्धजन्मप्रतिभाभेदवशादीषत्करमिति प्रमाणेभ्योऽपि सामर्थ्यातिशयं प्रतिभाया दर्शयति—दुर्ज्ञानोपायेषु च प्राज्ञैरपि स्वरविशेषाऽऽश्रयभेदेषु पक्षिणां पूर्वशब्दभावनाऽनुगमाद्विप्रकृष्टशब्दव्यापारा प्रतिभा प्रवृत्तिनिबन्धनम्।

ननूपायज्ञानमेव प्रमाणभूतमस्ति, तच्च प्रवृत्तिनिबन्धनमिति किं प्रतिभये?त्यत आह नोपायज्ञानं प्रवृत्तिनिबन्धनम्। कुतः? उपदेशाऽसकृद्दर्शनयोरभावाद्धि कारणम् उपायज्ञानं कारणद्वयनिवृत्तौ निवर्तेत धूम इव धूमध्वजनिवृत्तावित्यर्थः। अथ कुलायनिर्माणे कलविङ्कानां स्वरभेदविकारे च मधौ पुंस्कोकिलानामुपायज्ञानबीजमसकृद्दर्शनमप्यागोप्येनेत्याह—आहारविशेषप्रतिपत्तिरस्मदादिभिरत्नदादरणीयमिति प्रतिभेति यावत्। तज्जातीयानां तज्जातिरेषां तेषां समानजातीयानामुत्पन्नमात्राणामसकृद्दर्शनाऽभावादविदितप्रीत्युपायत्वेन प्रथमज्ञाननिबन्धना न भवेत्। प्रथमग्रहणेनाऽसकृद्दर्शनाऽभावं सूचयति।

नन्वनादित्वात्प्रेत्यभावस्य पुनः समानाऽसमानजातीयविविधदेहोपधानसमधिगततज्जातिनियततत्तद्भावनाविषयस्यैकस्यामपि

१ व्यापाराभावेऽपि मु पु पा।

**दानां प्लवनादिक्रियायां प्रवृत्तिश्चाऽज्ञातोपायानामेकजा-
तीयानां च रागादिमयी प्रवृत्तिः, शाश्वतिकविरोधानां
द्वेषप्रवृत्तिः । अतो नेष्टाऽभ्युपायमात्रं प्रवृत्तिहेतुः, अपि तु
प्रतिभेत्यादर्शयन् वृद्धाः । यथा ऽवोचन्–**

**उपश्लेषमिवाऽर्थानामाकरोत्यविचारिता ।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्त्तते ॥**

जातौ समस्तप्रतिभोदयप्रसङ्गः, कारणसन्निधानादित्यत आह—जाति-
भेदाऽभिव्यक्तप्रतिभाभेदानाम् । एतदुक्तं भवति । येन कर्माशयेन
यद्गतं जन्म स तज्जन्मोचितामेव भावनामभिव्यनक्ति, न चान्य-
न्तरोचिताम् । तस्यास्तत्रानुपयोगात् । अभिव्यक्तभावनाभेदः प्रति-
भाभेदमुत्पादयन्नभिव्यनक्ति । उत्पत्तौ सत्यां प्रतीतिः । प्लवनादि-
क्रियाप्रवृत्तिश्चाऽज्ञातोपायानां ज्ञानमात्राणां चक्रवाकादीनां न भवेत् ।
एकजातीयानां च पारावतोरगादीनां रागद्वेषमयी प्रवृत्तिर्ज्ञानमात्रा-
णामज्ञातसुखदुःखोपायानां न भवेत् । शाश्वतिकविरोधिनामहिन-
कुलादीनां द्वेषवती प्रवृत्तिर्न भवेत् ।

पूर्वपक्षैकदेशी प्रकृतमुपसंहरति—अतो नेष्टाऽभ्युपायता प्रवृ-
त्तिहेतुरपि तु प्रतिभेति । एतच्चा दर्शयन् वृद्धाः । यदवोचन्–

उपश्लेषमिवार्थानां सा करोत्यविचारिता ।

अविचारिते किं कथमनुपर्धायतवति विचारविकलेति
व्याकृतम् । न चासौ व्यतिरिक्तविषयेत्याह–

सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते ।

विच्छिन्नप्रतिपत्तीनां तापहृदतोयादीनां सहसोपश्लेषं विदधाति ।
तेषां सार्वरूप्यमापन्नेव स त्वापन्ना । तेषां तदारोहिणां वस्तुगताया वि-
चाराऽसहत्वात् । तस्मात्प्रतिभैव तादृप्यमापन्ना विषयत्वेन वर्तते । न
तु तद्व्यतिरिक्तोऽस्य विषयः । एतदपि च विच्छिन्नप्रतिपत्तीनामपि ब-
हुपदार्थानां समाविष्टपूर्वप्रतिभत्यवभासेवोदीयमानेति व्याख्यानम् ।
न चेयमाकस्मिकी, न चा प्रमाणमूला ऽपि न व्यवहाराङ्गमित्याह–

साक्षाच्छब्देन जनिता भावना ऽनुगमेन वा ।
इतिकर्त्तव्यतायां तां न कश्चिदतिवर्त्तते ॥
प्रमाणत्वेन तां लोकः सर्वः समनुगच्छति ।
व्यवहाराः प्रवर्त्तन्ते तिरश्चामपि तद्वशात् ॥
स्वरवृत्तिं विकुरुते[1] मधौ पुंस्कोकिलः कथम् ।
जन्त्वादयः कुलायादेः करणे शिक्षिताः कथम् ॥
आहारप्रीतिविद्वेषप्लवनादि[2]क्रियासु च ।
जात्यन्वयप्रसिद्धासु[3] प्रयोक्ता[4] मृगपक्षिणाम् ॥

उच्यते—

न निरालम्बनं ज्ञानं क्रियासाधनयोगिनि ।
सामान्ये ऽस्मिन्विप्रकृष्टे यच्छब्दवदुपायधीः ॥

साक्षाच्छब्देन जनिता भावना ऽनुगमेन वा ।
इति कर्तव्यतायां तां न कश्चिदतिवर्तते ॥

अप्रमाणभूतामपि च निर्विषयतया व्यवहारान् प्रत्यन्तरङ्ग-
तया चाऽव्यभिचारितया च ।

प्रमाणत्वेन तां लोकः सर्वः समनुगच्छति ।
न केवलं प्रेक्षावतां मनुष्याणामपि तु
व्यवहाराः प्रवर्तन्ते तिरश्चामपि तद्वशात् ॥

तदुदाहरणप्रपञ्चमात्यन्तिकप्रसिद्धिव्युत्पादनायाह—अन्यथा

स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलः कथम् ।
जन्त्वादयः कुलायादिकरणे शिक्षिताः कथम् ॥
आहारप्रीतिविद्वेषप्लवनादिक्रियासु च ।
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ॥

तत्र सिद्धान्ती पूर्वपक्षैकदेशिनमनन्तरतया निराकरोति—
उच्यते ।

1 स्वरवृत्तिं कुरुते मू० पु० पा० । 2 आहारप्रीत्यपत्यद्वेषप्लवनादि मू० पु० पा० ।
3 प्रसृतासु मू० पु० पा० । 4 प्रत्यय—मू० पु० पा० ।

**सा खलु प्रतिभा ऽऽलम्बनवती न वा ? आलम्बनवती चेत्तदेवाऽवबोद्धव्यं प्रवृत्तिनिबन्धनं, न च तदन्यदीहितोपायतायाः ।**

न निरालम्बनं ज्ञानं क्रियासाधनयोगिनि ।
सामान्ये ऽस्मिन्नुपकृष्टे स्वच्छन्दवदुपायधीः ॥

यद्यपि प्रतिभा निर्विषयेत्युक्तं, तथापि कदाचिदिदमभ्युपगमसिद्धान्तमात्रं स्यान्न तात्त्विकमिति दूषणाऽभिधित्सया विकल्पितम् । सा खलु प्रतिभा आलम्बनवती न वा । तत्र प्रथमं पक्षमाश्रित्याह - आलम्बनवती चेत्तदेव वा बोध्यं प्रवृत्तिहेतुर्न प्रतिभा । नन्वेतावतापि किमभिमतं सिद्धमित्यत आह— न च तदन्यदीहितोपायतायाः । एतच्चोपरिष्टान्निपुणतरमुपपादयिष्यते । तथा चाऽभिमतं सिद्धम् ।

द्वितीयं पक्षमवलम्ब्याह परः । ननु न विज्ञानं बाह्याऽविषयं सम्भवति । विकल्पाऽसहत्वात् । निराकारस्य वा विज्ञानस्य तद्विषयः साकारस्य वा । न तावन्निराकारस्य । विषयलक्षणाऽयोगात् । तथा हि । यदि सत्ताया विषयः सर्वोऽर्थः सर्वेषां सत्तामात्रस्याऽविशेषाद्विषया इति सर्वसर्वज्ञतापत्तिः । अथोत्पादकत्वाद्विषयत्वं तत्र कस्यचिदेवार्थस्य कस्यचिदेव प्रतिपत्तुः कस्यचिदेव प्रत्ययं प्रतीति नाऽतिप्रसङ्गः, तथापि चक्षुरादीनामप्युत्पादकत्वाद्विषयत्वं प्रसज्येत, विज्ञानसमये च तदुत्पादकस्याऽतीतत्वात् । क्षणिकत्वेन कार्यकारणयोरयौगपद्यात् वर्तमानग्राह्यताऽभावप्रसङ्गः । एकसामग्रीप्रतिबन्धेन वा वर्तमानविषयत्वे नेत्रादीनामपि तदेकसामग्रीनिबन्धिनां विज्ञानकालानां ग्रहणप्रसङ्गः ।

स्यादेतत् । प्रत्ययः स्वकारणोऽऽसादितसामर्थ्यभेदः कंचिदेवाऽर्थं वर्तमानमवभासयति न सर्वं, स हि तस्य महिमेति न

नेत्रादिविषयता । यथाऽऽह 'विषयग्रहणं धर्मो विज्ञानस्ये'ति । अथैतदालोचनीयं, किंविषयं पुनरिदं सामर्थ्यमिदं स्वकारणाधीनजन्मा विज्ञानस्येति । अर्थो विषय इति चेत् ? किमयमस्य निर्वर्त्यो यथा संयवनस्य पिण्डः, विकार्यो वा यथाऽवघातस्य व्रीहयः, संस्कार्यो वा यथा प्रोक्षणस्योलूखलादि, प्राप्यो वा यथा दोहनस्य पयः ? किमनेनाऽनभ्युपेतेनाऽऽरोपितेन ? अर्थप्राप्तौ तु विज्ञानसामर्थ्यमिति ब्रूमः । का पुनरियं प्राप्तिः ? प्रमितिरर्थधर्मः क चिदेव प्रमातारं प्रति द्वित्वादिवत्स्वाश्रयापेक्षाबुद्धिमन्तं प्रति बुद्ध्यपेक्षा-ध्वंसते द्वित्वादिकमिवाऽपेक्षाबुद्धिविनाशादिति चेत् । न तावदुन्मीलितलोचना नीलादिकमिव तद्धर्मं प्रमितिमीक्षामहे । अपि चाऽतीतानागतयोरप्रमितिप्रसङ्गः । न ह्यस्ति सम्भवः, अप्रत्युत्पन्नो धर्मोऽधर्मश्च तस्य प्रत्युत्पन्न इति ।

यदुच्यते, न विज्ञानादन्योऽर्थप्रकाशः किं तु विज्ञानप्रकाश एव सः । विज्ञानप्रकाशश्च सज्ञानमेव । कथमन्यप्रकाशोऽन्यस्येति चेत् । स्वभावभेदात् । रूपादयो हि स्वप्रत्ययादुपजायमाना नात्मनः परस्य वा प्रकाशकाः, ज्ञानं तु स्वप्रत्ययसमासादितजन्माऽऽत्मपरप्रकाशनपरमार्थं न जातु तदर्थमन्तरेण दृग्रूपं पश्चादेन सम्बध्यते परशुरिव शुद्धः स्वकारणाऽधीनजन्मा पश्चाच्छिदया, किं स्वर्थसहितमेवेति न पर्यनुयोगमर्हति । न हि परशुः स्वकारणादयोमयस्तन्त्वे किंचिदपेक्षते पर्यनुयुज्यते वा । स्वभावभूतं चाऽस्य परप्रकाशनमप्रकाशननिवृत्त्या कथंचित्कल्पितभेदं फलमिति स्वपरप्रकाशनसामर्थ्यमसामर्थ्यनिवृत्त्या कथंचित्कल्पितव्यतिरेकेण[2] प्रमाणमिति न निर्विषयं सामर्थ्यमिति ।

तत्र ब्रूमः । कः पुनरर्थः स्वपरप्रकाशनपरमार्थं विज्ञान-

---

१ विज्ञानम् । २ पु. पा. ।  २ व्यतिरेकि । २ पु. पा. ।

मिति । यदि प्रकाशनस्वभाव, सिद्धमेतत् । अथ परस्परसम्बन्धस्व-भावं, क पुनरेषां सम्बन्ध ? विषयविषयिभावः सम्बन्ध इति चेत् । तस्याऽर्थज्ञानसमवायेन नानात्वमनेकवृत्तितया प्रसज्येत । तथा च ते एव तत्त्वम् । अतीताऽनागताऽर्थवृत्तिता च कथमस्येत्यभिहितप्रा-यम् । विज्ञानमात्राऽऽश्रयत्वे तु कथमस्याऽर्थोऽन्वयः ? तस्माद्वा त्मपरप्रकाशनपरमार्थं विज्ञानमिति वर्णयता वनाद्विज्ञानतादात्म्य नीलादेरभ्युपगतं भवति । तथा च निराकारं विज्ञानं प्रति विषय-लक्षणाऽयोगात् साकारस्य विषयो ऽर्थ इति ।

अपि च विज्ञानप्रकाश एव चेदर्थप्रकाशस्तत्स्वरूपभेदेनाऽर्थभेदो व्यवस्थापनीयः । तस्य च निराकारतया विशेषस्याऽभावात् इदं नीलस्य संवेदनमिदं पीतस्येति विभागो भावादर्थक्रियाविशेषाऽर्थेनो न प्रवर्तेरन् । आकारभेदवत्त्वे तु विज्ञानस्य नीलसारूप्यं व्यवस्था-पनहेतुत्वात् प्रमाणं संविद्रूपता त्वस्य नीलं ऽर्थे व्यवस्थाप्यमान-त्वात् फलम् । यद्यपि सारूप्यं विज्ञानं चेत्येकमेव तत्त्वं तथापि कथं चिदेकव्यावृत्तिनिष्ठरूपाऽवगाहनस्वभावैर्विकल्पैर्व्यावर्त्यभेदा-ऽऽरोपितभेदं प्रमाणफलभावमश्नुते । यदाह "न हि वित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राऽविशेषादविशेषप्रसङ्गात् । सा तु सारूप्य-माविशत्स्वरूपयन्ती घटयेदिति । तत्सारूप्यतदुत्पत्तिभ्यां च विषय-त्वेन नेन्द्रियादिषु तत्प्रसङ्गः । अर्थोऽऽहिताऽऽकारवेदनमेव चार्थ-वेदनं ज्ञानाकाराश्च वर्तमाना इति वर्तमानता ऽप्युपपन्नेति । यथाह ।

भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः ।
हेतुत्वमेव तद् युक्तं ज्ञानाऽऽकाराऽर्पणक्षमम् ॥ इति ।

तथाप्युक्तं स्यादर्थवेदनमिति । तस्मात्साकारज्ञानगोचरो ऽर्थ इति सौत्रान्तिकाः प्रपेदिरे ।

तदिदमनुपपन्नम् । तथा हि । साकारं विज्ञानमर्थविषयमित्य-

नुभवाद्भवस्थाप्यते ऽनुमानाद्वा । न तावदनुभवः स्वाकारमात्रप-र्यवसायी नीलमपरं गोचरयति । नीलमिति हि प्रतिभासो न पुन-र्नीलं इति । न च भिन्नं तद्विषयो भवितुमर्हतीत्युक्तम् ।

स्यादेतत् । द्विविधो हि विषयः प्रमाणानां, ग्राह्यो ऽध्यवसे-यश्च । तदाया प्रत्यक्षस्य ग्राह्यः क्षण एको ऽध्यवसेयश्च प्रवृत्तिवि-षयः सन्तानः । अन्यथा ऽर्थक्रियाऽर्थिं प्रमाणमप्रवर्तकं स्यात् । प्रवृत्तिविषयापदर्शनं हि प्रवर्तकत्वं प्रापकत्वं च प्रमाणानाम् । न च ग्राह्यक्षणः एव प्रवृत्तिविषयः,तस्य तदानीमतीतत्वात् । सन्तानस्तु स्यात् । न चाऽसौ ग्राह्य इत्यध्यवसेयत्वमभ्युपेतव्यम् । तथा ऽनुमानविकल्पस्यापि ग्राह्यं सामान्यमन्यव्यावृत्तिरूपम् । अध्यवसे-यस्तु प्रवृत्तिविषयो ऽर्थक्रियात्मकः । प्रवृत्तिविषयाऽपेक्षं हि प्रामाण्यं तयोः । यथाह "न ह्याभ्यामर्थं परिच्छिद्याऽध्यवसाय प्रवर्तमानो ऽर्थक्रियायां विसंवाद्यते" इति । तदेवं बाह्यमग्राह्यमध्यवसेयतया विषय इति तत्राऽध्यवसायाद्योऽपरिज्ञानात् विकल्पो ऽध्यवसायः । तत्रानुमानं विकल्परूपत्वात्तद्विषयं प्रत्यक्षं तु विकल्पजननादिति चेत् । ननु विकल्पो ऽपि स्वाऽऽकारविषयत्वात्कथं बाह्यमध्यवसा-तुमर्हति ? यदि मन्येत न विकल्पानां विषयः स्वाकारो, ऽपि तु संवेदनस्य । प्रत्यक्षस्य हि विकल्पविषयो यो विकल्प्यते । न च स्वरूपं विकल्प्यते । तस्य सर्वतो व्यावृत्तस्याऽभिलापसंसर्गयोग्य-त्वाऽभावाद्विशदप्रतिभासत्वाच्च । तस्मादात्मन्यविकल्पाः स्वाऽवभासं बाह्यतया विकल्पयन्तस्तत्र तत्र प्रवर्तयन्ति स्वव्यवहारार्थिनः । पारम्पर्येण च बाह्यादुत्पत्तेस्तत्प्रतिबन्धात्तत्प्राप्तेर्न विसंवादयन्ति लोकमिति । यदाह 'स्वप्रतिभासे ऽनर्थे ऽर्थाध्यवसायेन प्रवृत्ति'रिति । आह अनर्थं स्वाभासमर्थमध्यवस्यतीति निर्वचनीयमेतत् । नन्व-र्थमारोपयन्तीति किं विकल्पस्य स्वरूपाऽनुभवाऽऽरोप उत व्यापारा-

न भवति पीतज्ञानं वा भवति ? सामर्थ्यादसामर्थ्याच्चेतरस्मिन्निति चेत् । कुतः पुनरयं सामर्थ्यभेदः ? स्वहेतुभेदादिति चेत् । एवं तर्हि क्षणानामपि स्वकारणभेदनिबन्धनं शक्तिभेदो भविष्यति । सन्ताना हि क्षणभेदहेतवः प्रतिकार्यं भिद्यन्त एव । न च सन्तानो नाम कश्चिदेक उत्पादकः समस्ति, यदभेदात् क्षणा न भिद्येरन् । ननूक्तं न क्षणभेदाऽभेदाभ्यां शक्तिभेदाऽभेदौ, भिन्नानां क्षणानामेकस्य सामर्थ्यस्योपलब्धेः । अन्यथैक एव पूर्वक्षणो नीलविज्ञानजननः स्यान्न क्षणान्तराणीति न नीलाकाराणि विज्ञानान्तराण्युत्पद्येरन्, यदि भिन्नानां नैकं सामर्थ्यम् । ननु नीलसन्तानिनामपि मिथो भिन्नानां नैकमस्ति नीलाकारादिसामर्थ्यमिति सन्निधाने ऽपि नीलान्तरस्य न नीलविज्ञानमुत्पद्येत । सन्तानिभेदे ऽपि शक्त्यभेद इति चेत् । क्षणभेदेन किमपराद्धं येन तस्मिन्नपि न भवति । अथ सन्तानिभेदे शक्तिभेद एव, तथा च कार्यभेदः । न हि यदेकस्मिन्नीलाकारं ज्ञानं ज्ञानान्तरमपि नीलाकारं तदेव भवितुमर्हति । तदस्माकं क्षणभेदे ऽपि समानम् । अन्यथाऽभिनिवेशात् । अपि चोत्पत्तिसारूप्याभ्यां विषयत्वे चक्षुरालोकसंस्काराणामपि यथाक्रमं रूपग्रहणं प्रति नियमस्पृष्टताज्ञानजनकत्वसारूप्योस्तदुत्पत्त्या च नीलवद्ग्रहणप्रसङ्गः । अत्यन्तसारूप्याद्वा विषयत्वे नीलविज्ञानसमनन्तरप्रत्ययस्य नीलार्थादपि सदृशतरस्य नीलज्ञानविषयत्वाऽऽपत्तिः । ततोऽप्युत्पत्तिसारूप्ययोरध्यवसायादुपयभावः स चार्थ एव नान्यथेति चेत् । न । उक्तोत्तरत्वात् । निवेदितमेतदधस्तात् । यथा 'नाऽध्यवसायगोचरो बाह्य' इति ।

तदनेन प्रबन्धेन वेद्यत्वलक्षणो हेतुः समर्थितो विज्ञानवादिनाम् । स चैवं प्रयोगमारोहति । यद्वेद्यते येन वेदनेन ततस्तन्न भिद्यते यथा ज्ञानस्याऽऽत्मा, वेद्यन्ते च नीलादय इति विरुद्धव्या-

**निरालम्बनं तु ज्ञानमयुक्तमेव ।**

धोपलब्धिः । निषेध्यभेदविरुद्धं खल्वभेदस्तेन व्याप्तं वेद्यत्वं भिन्नस्य साऽऽकारनिराकारविज्ञानप्रवेदनीयस्याऽनुपपत्तेरिति प्रपञ्चितमधस्तात् । तस्माद्विरुद्धाऽभेदव्याप्तवेद्यत्वोपलब्धिरूपा ऽनुपलब्धिरेव भेदाऽभावसाधनीति[1] स्थिता बुद्धीनां बाह्याऽनालम्बनत्वसिद्धिः ।

अतश्चैतदेवं सहोपलम्भनियमो ज्ञानस्यार्थेन । तथा हि । यद्येन नियतसहोपलम्भनं ततो व्यतिरिच्यते यथैकस्माच्चन्द्राद् द्वितीयश्चन्द्रः । नियतसहोपलम्भनं ज्ञानमर्थेनेति व्यापकविरुद्धोपलब्धिः । अभेदो हि सहोपलम्भनियमेन व्याप्तः । न खलु नीलपीते भिन्ने नियमेन सहोपलभ्येते । तद्विरुद्धश्चाऽयं नियमः स्वविरुद्धमनियमं निवर्तयंस्तद्व्याप्तं भेदमपि निवर्तयति । तद्व्यापकविरुद्धोपलब्ध्या भेदाऽभावसिद्धिः । यथाह 'सहोपलम्भनियमादभेदो नीलतद्धियो'रिति । कथं तर्हि ज्ञानात्मकात्प्रतिपत्तुरर्थस्य भेदबुद्धिर्नीलमेतदिति? बलवद्वेद्यत्वसहोपलम्भनियमाऽनुमानेन बाधिता भ्रान्तिरेव । यदाह 'भेदश्च भ्रान्तिविज्ञानैर्दृश्येतन्दाविव द्वयम्' इति ।

अपि च यः प्रत्ययः स सर्वो बाह्याऽनालम्बनः । यथा स्वप्नप्रत्ययः, प्रत्ययश्च विवादाध्यासित इति स्वभावहेतुः । निरालम्बनं विज्ञानं तन्मध्यपातिनी च प्रतिभेति सापि तथेत्यत आह— निरालम्बनं तु ज्ञानमयुक्तमेव । इदमत्राऽऽकूतम् । नैतन्निरालम्बनत्वं प्रमाणं भवितुमर्हति । तथा हि । किमनुभवसिद्धस्य नीलादेर्वेद्यस्य तत्त्वं हेतुः क्रियेत, आहो स्विदन्यस्य ? तत्र यद्यनुभवसिद्धस्य ततो ऽनहङ्कारास्पदमसितादिरूपं स्थूलं नीलादिविच्छिन्नं वेद्यमनुभूयते, नास्याऽऽन्तरज्ञानस्वभावता शक्यसाधना । यथाहाचार्यः 'स बहिर्देशसम्बन्धः प्रत्यक्षमुपलभ्यते' इति । अथाऽन्यस्य । तस्याऽसिद्धं वेद्यत्वम् । ज्ञानाकारत्वे चास्य न काचित्क्षतिः । यदुच्येत

[1] भावं साधयतीति २ पु. पा. ।

नाऽनुभूतत्वमाचस्य हेतुत्वमपि त्वनुभूताऽवसितत्वस्य । अवसायश्च स्वभावत एकव्यावृत्तिनिष्ठरूपऽवगाही न मनागपि व्यावृत्त्यन्तरमवगमयति । मा भूदिह सदभिलापविकल्पपर्यायता सर्वेषां गवादिशब्दविकल्पानाम् । व्यावर्त्यभेदाऽनुविधायिनश्च व्यावृत्तिभेदा । तदिहाऽवेद्यव्यावृत्तिकृतवेद्यत्वाऽवगाही विकल्पो नाऽबाह्यव्यावृत्तिकृतं बाह्यत्व विगाहतइति यदेव किं चित्पांसुलपादकेन हालिकेनापि नीलादेर्वेद्यत्वमनुभूतावसितं तद्बाह्यत्वनिरासाय समर्थमिति न विरोधः । तदसत् । न खल्वेकाऽवसायगोचरतया विरोधमापादयामो, ऽपि तु यद्बाह्यत्वं स्थूलत्वं चाऽनुभूतावसितं नीलादेस्ताभ्यां विरोधी । तथा हि । ज्ञानाकारत्वे नीलस्य नाना दिग्देशव्यापिता स्थूलत्व विच्छिन्नदेशता च बाह्यत्वं न स्याताम् । न खल्वेकत्वेन ग्रहणाऽग्रहणे एव परं विरुध्येते येन विज्ञानदेशे नीलादेः स्थूलस्य ग्रहणादेवाऽविरोधः स्यात्,दपि तु तद्देशत्वाऽतद्देशत्वे अपि । तथा हि । भिन्नदेशयोरपि परस्परपरिहारेण स्थितिरस्ति विच्छिन्नाऽवभासज्ञानकारणशक्तिर्भिन्नदेशत्वम् । तत्र पूर्वदिग्भागस्थितान्नीलाद्विच्छिन्नमवभासते प्रत्यक्षेण, न तु परस्परात्मकमनुभवाऽनुसारिणा निश्चयेन यथा ऽवसीयते तथा ऽनवमायात्परस्परविच्छेदेन चाऽवसायात् । दृश्यमान चाऽनुभवाऽनुसारिणा निश्चयेन यथा ऽवसीयते तथैव सदसति बाधके । यदि च पूर्वदिक्कमितरदिक्क गृह्येत नैव दिग्भिन्नभावदर्शन भवे,दस्ति च तत् । तस्माद्दिगन्तरसन्निविष्टं रूपमितरदिक्कं न गृह्यते । तथा सति यथा नीले पीतमदृष्टमिति नीलपरिच्छेदे तदभावो व्यवच्छिद्यते तद्वच्च पीतादिवत्पूर्वदिक्के रूपे तदितरदिक्कं रूपमदृष्टमिति पूर्वदिक्करूपपरिच्छेदे तदभावो व्यवच्छिद्यते । इतरथा ताद्रूप्यमेव न परिच्छिन्नं स्यात् । तदभाववच्च पूर्वदिक्काऽभाववन्तस्तदितरदिग्भागवर्तिनः स्वभावाद्व्यवच्छेत्तव्याः नीलपरिच्छेदेनेव नीलाऽभाववन्तः पीतादय इति

सिद्धस्तद्देशत्वाऽतद्देशत्वयोः परस्परपरिहारस्थितिलक्षणो विरोधः । यत्र चैव विधो विरोधः तत्र नानाऽभेदो यथा नीलपीतयोः । एवंविधस्त्वाऽनुभूयमाने नीले स्थूले विरोध इति व्यापकविरुद्धोपलब्धिः । प्रतिषेद्धव्यः खलु भेदो विरोधाऽभावेन व्याप्तस्तद्विरुद्धश्च विरोध इति । तेन यावदुक्तं भवति नीलं वा नेति तावदुक्तं भवति नीलं स्थूलमिति । न च नानैकज्ञानात्मेति युक्तम् । एकत्वस्य नानात्वविरोधात् । न च नानाविज्ञानानीति साम्प्रतम् । प्रत्येकं स्वाऽवभासमात्राऽवसायित्वे नानाविज्ञानानां स्थूलाभासाऽनुभवाऽभाव[1]प्रसङ्गात् । न च नानाकाराऽनुभववासनाजन्मा विकल्पस्तदनुभवाकारसङ्कलनात्मकस्थूलाकारमाभासयितुमर्हति । तस्याप्येकत्वे ऽनुभववदाभासत्वाऽनुपपत्तेः । नानात्वे वा स्थूलाभासाऽभावप्रसङ्गात् । विकल्पविषयत्वेन च विशदाभताऽनुपपत्तेः । यदाह । 'न विकल्पानुबन्धस्य स्पष्टार्थप्रतिभासते'ति । न चाऽननुभूतं स्थूलत्वं येन तदुपाधिर्विकल्पे विस्पष्टाभासः[2] स्यात् । तस्मादर्थे विज्ञाने च स्थूलत्वाऽनुपपत्तेरसदेतदभ्युपगन्तव्यम् । न च तद्विज्ञानं सम्भवति । सदसतोरेकत्वाऽनुपपत्तेः । एतेनेदमिति विच्छिन्नाऽवभासो व्याख्यातः । तस्मादनिच्छताऽपि विज्ञानानां मनोवेद्यत्वमभ्युपगन्तव्यम् । तथा च वेद्यत्वमभेदस्य न व्याप्यमिति विरुद्धव्यापकोपलब्धिरसिद्धा नाऽभेदोपस्थापनेन भेदं निषेद्धुमर्हति । ननु न परप्रतिबन्धमात्रादर्थसिद्धिः, उक्तं च 'साकारमनाकारं च विज्ञानमनात्मभूतवेदनासमर्थ'मिति । तत्किमिदानीं समर्थनीय एव स्थूलाऽनुभवो नास्ति वा ? न तावन्नास्ति, नीलवदस्याप्यनुभवात् । तदपह्नवे चाऽनिर्मूलतया नीलाऽनुभवस्याऽपह्नवप्रसङ्गः । तथा चास्य कुतो भेदो वा ? अथास्ति न चाऽसमर्थनीयः । न च ज्ञानाऽऽकारः । का

[1] स्थूलाऽभाव० २ पु० पा० ।
[2] विस्पष्टाकारता स्यात् २ पु० पा० ।

तर्हि तस्य समर्थना ? अत एवाऽनात्मनः प्रकाशनविज्ञानं स्वकारणा-
ऽऽसादितात्ऽदृष्टान्तसिद्धस्वभावभेद न कथन्तास्पदं भवितुमर्हति । न
खल्वनुभवो दृष्टान्तमपेक्षते । मा भूद्गन्धादावसाधारणगन्धादिगुणा-
ऽननुभवनम् । कः पुनरस्याऽनात्मसम्बन्ध इति चेत् । यथा-
ऽन्यत्रापि सम्बन्धस्य कः सम्बन्धिभ्यां सम्बन्धः ? रूपेणेव स
तथेति न सम्बन्ध्यन्तरमपेक्षते । न जातु सम्बन्धिनावन्तरेणाऽसौ
निरूप्यते । न च जातु तस्मिन्सति सम्बन्धिनावसम्बन्धिनौ
भवतः, तेन सम्बन्धिसम्बन्धौ न परमार्थः । सम्बन्धसम्बन्धिनौ तथो-
त्पन्नौ सम्बन्ध इति चेत् । ननु स्मृतावनुभवो ऽपि न स्मृतमन्त-
रेण निरूप्यते । न च तस्मिन्सति स्मृतमननुभूतं भवतीति रूपे-
णेव सो ऽपि स्मृतप्रकाशनपरमार्थः सम्बन्ध इव वा तथोत्पन्नौ
सम्बन्धिभाविव वा सम्बन्धनपरमार्थौ । सेयं समर्थना । यदेवं सदस-
नुभवमात्रस्यैवाऽनात्मग्राहितामापादयति, न हि नीलाद्यनुभव
ऽपि नीलादिमन्तरेण निरूप्यते । न च तस्मिन्सति नीलादयो
नाऽनुभूता इति स्मृताऽनुभववदनात्मनो नीलादेरनुभव स्वभाव
एव न सम्बन्धान्तरेणेति तत्त्वम् । अनदात्मनोऽपि वेद्यत्वोपपत्ते-
रनैकान्तिकं वेद्यत्वम् । एवं सहोपलम्भनियमोऽप्यनैकान्तिकः ।
स्वकारणाऽर्पितो हि तादृश स्वभावभेदो विज्ञानस्य येनात्माऽना-
त्मनोरसावेक एवोपलम्भः । न च स्वभावः कारणान्तरगोचर इत्यु-
क्तम् । एतेनैव प्रत्ययत्वमपि प्रत्युक्तम् । स्वप्नादिप्रत्ययानां च समा-
रोपितबाह्यविषयत्वात्साध्यविहीनत्वं दृष्टान्तस्य । तथा च विरु-
द्धो हेतुः ।

अपि चाऽसिद्धः सहोपलम्भः । न हि य एव नीलस्योपल-
म्भः स एव तदुपलम्भस्येति नियमः समस्ति । न खल्वयमनुभव-
गोचरः । तथा हि । विस्फुरितार्थं प्रतिपत्ता नीलमिदमिति पश्यन्न

तदैव तदनुभवमपि पश्यति । नीलग्रहणो हि तदनुभवितया वा नाऽनु भवग्रहणो ऽनुभूयमानोपाधितया ऽनुभवमपि परिच्छिनत्ति । न खल्वनुभवाऽवसाने ऽनुभूयतइति भवति । न ह्यस्ति सम्भवो दण्डो न गृह्यते गृह्यते च दण्डीति । तस्माद्विशेषणतया ऽनुभवग्रहणे ऽप्य- नुभूयमानग्रहणो ऽनुभवितेति सिद्धः सहोपलम्भनियम इति चेत् । नैतत् । न ह्यनुभूयते नीलमित्यनुभवो ऽपि तु नीलमिति ॥ असत्यनुभवप्रकाशे विषया न प्रकाशेरन् । तदधीन हि प्रकाशं तेषाम् । न खलु न लतो नीलानुभवः स्तानन्तमवभासितुम् । न ह्यनुभवाद- न्यो विषयाऽवभासः, यमयमनवभासमानो ऽपीन्द्रियादिवदाद्धीनो,- ऽपि तु परप्रकाशनपरमार्थो ऽनुभव एव तत्प्रकाश । तथा च यदि निर्लीयते तन्निर्लीनस्वभावत्वाद्विषयानपि नाऽऽभासयेदिति नाऽनुभवो न विषया भासन्तइत्यायातमान्ध्यमशेषस्य जगत । तस्मादनुभव- प्रकाशाऽ यत्तप्रकाशत्वमेषितव्यं विषयाणाम् । अपि चैकस्मिन्नर्थे स्फुटा- ऽस्फुटाऽवभासौ युगपदुपलभ्येते प्रतिपत्तॄणाम् । न चाऽसावर्थधर्मः स्फुटत्वादि रेकस्मिन्युगपद्विरुद्धधर्मसमावेशाऽसम्भवात् । विज्ञानभे- दस्तूपपद्यतइति विज्ञानस्य धर्मः । तथा च तज्ज्ञानमनुभवसिद्धम् ।

तदेवमनुभवादेव स्वसंवेदनसिद्धौ या नाम स्वसिद्धान्ता- भ्यासाऽऽहितव्यामोहो विप्रतिपद्यते न प्रत्यनुमानमुपन्यस्यते । यद्य- त्प्रकाशाऽऽयत्तप्रकाशं तत्तस्मिन्प्रकाशमानएव प्रकाशते, यथा दण्डप्रका शाऽऽयत्तप्रकाशो दण्डी । प्रत्ययप्रकाशायत्तप्रकाशश्च प्रत्येतव्यो रूपा- दिरिति स्वभावहेतुः । न च प्रत्ययप्रकाशाऽऽयत्तप्रकाशत्वं रूपादीना- मसिद्धम् । उक्तं हि 'तदनायत्तत्वे प्राप्तमान्ध्यमेव जगतो ऽशेषस्येति । न च स्वसंवेदने स्वात्मनि वृत्तिविरोधः । न हि संवेदनस्य स्वरू पादन्या वृत्तिरस्ति यतः स्वात्मनि कर्तृकर्मभावो विरुध्येत । संवेदनमेव त्वपराधीनप्रकाशमाविर्भूतं तत्स्वभावमात्मसंवेदनमाचक्षते ।

न च स्वभावेन भावो विरुध्यते । तस्मादात्मसंवेदनसिद्धेः सिद्धः सहोपलम्भनियम इति ।

तदनुपपन्नम् । हेत्वसिद्धेः । न हि नीलादयोऽनुभवप्रकाशाऽऽयत्तप्रकाशाः किं त्वनुभवाऽधीनप्रकाशाः । एवं चेन्नेत्रादिभिरनेकान्तः । किं पुनर्नीलादीनामनुभवे आयत्तता ? नन्वनुभवप्रकाशेऽपि किमायत्तते ? यदि न किञ्चिन्नाऽतिरिक्तं वच । अनुभवप्रकाशाऽऽयत्तप्रकाश इति चेत् । ननु स एव तदधीन इत्युक्तं भवति, तच्चाऽयुक्तम् । न ह्यात्मन्यायत्तते, भेदाऽभावात्तद्भावस्य अनुभव एवात्मन एतस्य च सम्बन्धितयाऽनुभवभेदोऽनुभवप्रकाशो नीलप्रकाश, तथा चानुभवप्रकाशाधीनता नीलप्रकाशस्येति चेत् । एवं तर्हि स्वप्रकाशाऽधीनस्य नीलसम्बन्धितेत्युक्तं स्यात् । तच्चेतावद्वक्तव्यम् । भवतु स्वप्रकाश. कुतस्तु नीलसम्बन्धितेति । स्वभावादिति चेत् । कृतं तर्हि स्वप्रकाशेन, स्वभावत एव तत्सम्बन्धोपपत्तेः । एतावांस्तु विशेष, तथाऽसौ कल्पिता तत्सम्बन्धिता, मम तु पारमार्थिकी, यां किल ज्ञेयाऽभिव्यक्तिरिति ज्ञाततेति वा कर्मतेति वाऽऽचार्याः प्रचक्षते । ननु कर्मतेति चेयमर्थधर्मः, कथमर्थधर्मोऽयमतीतादिषु सम्भवतीत्युक्तम् । नेयमर्थधर्मः, किं तु ज्ञातुरात्मनो ज्ञेयसम्बन्धभेद एव ज्ञातता । स च ज्ञातृधर्मो ज्ञायमानार्थावच्छिन्नो ज्ञेयं प्रति गुणभाव आत्मनः सुखादिवत्प्रमित्साऽनपेक्ष[1]समनन्तरप्रत्ययोत्पन्नमानसप्रत्यक्षवेदनीय एकसमवेतोऽप्युभयाऽधीननिरूपणतयाऽऽश्रय शक्तिरिव सम्बन्धः सम्भवति । नन्वयमनुभव एव । तथा हि । सोऽपि विषयविशेषप्रतिबन्धव्यवहाराऽनुगुणः पुंसो धर्मभेद आख्यायते । सत्यमीदृशः । न त्वसौ सम्बन्धः[2] । व्यापारो हि स आत्मनः । तस्य तु फलं सम्बन्ध आत्मनो ज्ञेयप्रवणतालक्षणः । कुतः पुनरनुभवोऽवगतिः ? अस्मादेव तु सम्बन्धलक्षणात्फलात् । यदाह 'ज्ञाते त्वनुमा-

१ प्रमित्सितस्य सापेक्ष ३ पु पा ।   २ स धर्मदृश ३ पु पा ।

नादवगच्छतीति । आत्ममनःसंयोगविशेषादेव कादाचित्कफलप्रसवादनुभवाऽनुमानमिति चेत् । तत्किमिदानीमात्मनः संयोगविशेषो जात इत्यात्मना ऽर्थं प्रति गुणभूतेन भवितव्यं ? क्रिया हि गुणप्रधानभावमापादयति भावाना पाकादिषु तथोपलम्भात् चैत्रौदनादीनाम् । ननु क्रियोपधाननिबन्धनश्चेत्सम्बन्धः कथमप्रतीतायां क्रियायां शक्यः प्रतिपत्तुम् ? प्रतीता चेत्क्रिया न तर्हि सम्बन्धात्फलभूतात्तत्प्रतीति । नैतदस्ति । क्रियामन्तरेण हि न सम्बन्ध , न पुन क्रियाप्रतीति विना तत्प्रतीति,रप्रतीतायामपि क्रियायां सम्बन्धप्रतीतेः । यथा ऽऽग्नेय इति शब्दाऽवगताद् द्रव्यदेवतासम्बन्धादनुमीयते यजिस्तथोत्पन्नविज्ञानार्थं प्रति गुणभूतमात्मानं मनसैव सहसा ऽवगम्य तद्धेतु संवेदनक्रियामनुमिमीते। आत्ममन.संयोगमात्रात्तदनुपपत्ते । यथाह । 'पूर्व सा गृह्यते पश्चाद् ज्ञानं तज्ज्ञानतात्रशा'दिति ।

स्फुटत्वमपि ज्ञेयताविशेष एव न संवेदनविशेष । तथा हि । सामान्यविशेषतद्वत्ता संवेद्यता स्फुटता, तद्विपरीतत्वमस्फुटता, यतो दूरे वृक्ष इति प्रतियन्ति न पुनरशोक इति वा सहकार इति वा । प्रत्यासीदन्तस्तु मलयमारुताऽऽकम्पमाननवपल्लवमानन्दनिष्यन्दमधुपमालानिपीयमानमधुरमधुरसस्तबकरूकदम्बकं रक्ताऽशोकपादपम् । तस्माज्ज्ञेयतायामय विशेषो न ज्ञाने इति सिद्ध पराङ्. प्रत्यया न प्रत्यङ्ङ् इति ।

प्रयोगस्तु विवादाऽध्यासिताः प्रत्ययान्तरेणैव वेद्याः प्रत्ययत्वात् ये ये प्रत्ययास्ते सर्वे प्रत्ययान्तरवेद्याः यथा न प्रत्ययान्तरेणैव वेद्याः । अविद्यमानस्याऽवभासे ऽतिप्रसङ्गात् ज्ञायमानस्यैवा ऽवभासो ऽभ्युपेयः । तथा च विज्ञानस्य स्वसंवेदने तदेव तस्य कर्म क्रिया चेति विरुद्धमापद्येत । यथोक्तम् ।

**तस्य ज्ञेयाऽवभासकार्यलक्षणत्वात् ।**

**विषयाऽभावाच्च व्युत्पत्त्यसम्भवे तदपेक्षस्य प्रवृत्तिः स्यात् ।**

"अङ्गुल्यग्रं यथात्मानं नाऽऽत्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति" । इति ।

यत्प्रत्ययत्वं वस्तुभूतमविरोधेन व्याप्तं, तद्विरुद्धविरोधदर्शनात्स्वसंवेदनान्निवर्त्तमानं प्रत्ययान्तरवेद्यत्वेन व्याप्यत इति प्रतिबन्धसिद्धिः । एवं प्रमेयत्वगुणत्वसत्त्वादयोऽपि प्रत्ययान्तरवेद्यत्वहेतवः प्रयोक्तव्याः । तथा च न स्वसंवेदनं विज्ञानमिति सिद्धम् ।

असिद्धश्च सहोपलम्भनियमः । फलभेदसमुन्नेयं च विज्ञानमभिन्नं सन्न फलभेदायाऽलमिति विनापि नीलाद्याभासं स्वभावत एव भेदात्प्रतिकर्मं व्यवस्थाप्यते । तदेवमसति बाधकेऽनुभव एवात्मयाही बाह्यसद्भावे प्रमाणं, न प्रमाणान्तरमत्राऽनुसरणीयम् । न हि कश्चित् दृष्टं चौत्कारेण समनुमन्यते प्रेक्षावन्तः । प्रमेयपरीक्षा तूपेक्षिता विस्तरभयात् । तदनेन प्रबन्धेनोक्तोऽभिसन्धिराचार्यस्य निरालम्बनं ज्ञानमयुक्तमेवेत्यवधारयत. ।

निराकरणान्तरमाह—तस्य ज्ञेयाऽवभासकार्यलक्षणत्वात् । ज्ञेयाऽवभासो ज्ञातताऽर्थस्य तयाऽत्यन्तपरोक्षं विज्ञानमनुमातव्यं, तत्र प्रमाणान्तराभावादित्युक्तम् । निरालम्बनत्वे तु ज्ञेयाऽवभास एव नास्तीति केन ज्ञानमनुमीयेत ? यस्य निरालम्बनत्वं साध्येत । तदनेन धर्मिणः साध्यधर्मेण विरोधो दर्शितः । तथा चाऽऽश्रयाऽसिद्धत्वं हेतोरिति भावः । अपि च व्युत्पन्नसम्बन्धः शब्दः प्रतिभां भावयेत् । व्युत्पत्तिश्चाऽर्थेन सह शब्दस्य न विज्ञानेन कार्येण तस्याऽऽनन्त्याद्व्यभिचाराच्च । सामान्यस्य च प्रतिभात्वस्याऽकार्यत्वात्कारकस्य स्वकार्ये व्युत्पत्त्यनपेक्षत्वात् । अर्थस्य च निरालम्बनत्वाऽभ्युपगमे नास्तीति व्युत्पत्तेरसम्भवात्तदनपेक्षस्य च प्राक् प्रवृत्तिः स्यात् न चा-

**ननु कारकसंसर्गिणी क्रिया आलम्बनमिष्टैव । न । तस्या अप्रवर्त्तकवचनजन्मन्यपि प्रख्यायां साम्याल्लिङादियुक्तेभ्यो वचनेभ्यः प्रतिभाभेदादप्रवृत्तिप्रसङ्गात् ।**

**ननु नाऽप्रवर्तकमनिवर्तकं वा वचः समस्ति । वैयर्थ्यात् । कर्तव्यतापर्यवसायिनी हि वाक्यप्रवृत्तिः । कथं तर्हि भूताऽन्वाख्यायिनो वेदान्ता लौकिकवचांसि च? कर्तव्यताभेदात् वृत्तिनिवृत्तिप्रतिपत्तिविषयत्वात् । सर्वा हि**

सावस्तीत्याह—विषयाऽभावाच्च व्युत्पत्त्यसम्भवे तदनपेक्षस्य प्रवृत्तिः स्यात् ।

कश्चिदाह—ननु कारकसंसर्गिणी क्रिया ऽऽलम्बनमिष्टैव, तथापि न भवदभिमतोपायता सिध्यतीति भावः । दूषयति—न, तस्याः 'काष्ठैः पचयती'त्यप्रवर्तकवचनजन्मन्यपि प्रख्यायां साम्यात्प्रवृत्तिः स्यादप्रवृत्तौ वा काष्ठैः पचेदिति लिङादियुक्तादपि वाक्यात्प्रतिभाया अभेदादप्रवृत्तिप्रसङ्गात् ।

परस्त्वप्रवर्तकवचनजन्मतीत्यमृष्यमाण आह—ननु नाऽप्रवर्तकमनिवर्तकं वा वचः समस्ति । कुतः ? वैयर्थ्यात् । परप्रत्यायनाय हि वचनमुच्चारयन्ति प्रेक्षावन्तः । तदेव च परः प्रत्यायितव्यो यत्प्रयोजनवत् । न च भूताख्यानं तथा । तस्मात्प्रवर्तकं निवर्तकं वा वचो नाऽन्या गतिरस्तीत्यर्थः ।

ननु भूतान्वाख्यानमपि दृश्यते लोके वेदे च निधिमानेष भूभागः, 'सदेव सोम्येदमग्र आसी'दिति, अत आह—कर्तव्यतापर्यवसायिनी हि सर्वा वाक्यप्रवृत्तिः । यद्येवं कथं तर्हि भूतान्वाख्यायिनो वेदान्ता लौकिकानि च भूयांसि वचांसि? उत्तरम्—कर्तव्यताभेदात् । प्रवृत्तिनिवृत्तिप्रतिपत्तिविषयत्वात् । एतदेव स्फुटयति—सर्वा हि

कर्त्तव्यता भेदवती। वेदान्तेषु तावदात्मतत्त्वप्रतिपत्तिकर्त्तव्यता । लोके चेदमिह निध्यादि प्रतिपत्तव्यमिति वाक्यपर्य्यवसानम् ।

नैतत्सारम् । शब्दात्प्रतिपत्तेरनुत्पत्तेः पुनस्तत्राऽव्यापारात् । कर्म्मफलसम्बन्धबोधवत् । निश्चयो ऽपि यदि शब्दात्, संजात एव, अन्यतश्चेत्तदाप्रामाण्यम् । अर्थपरतापि न दृष्टार्थत्वात्स्वाध्यायाऽध्ययनविधेः कर्म्मवत् । अवि-

कर्तव्यता भेदवती[1] । तमेव भेदमाह-वेदान्तेषु तावदात्मप्रतिपत्तिकर्तव्यता । आत्मा ज्ञातव्य इति हि प्रतिपत्तिरात्मनि विधीयते, तत्परत्व च वेदान्तानाम् । लोके ऽपि चेदमिह निध्यादि प्रतिपत्तव्यमिति वाक्यपर्यवसानम् । दूषयति—नैतत्सारम् । इदमत्र विकल्पनीयम् । आत्मप्रतिपत्तिकर्तव्यतापरत्वमुपनिषदाम् । तिस्रः खल्विमा. प्रतिपत्तयः सम्भवन्ति । श्रुतमयी, चिन्तामयी, साक्षात्कारवती, चेति । तत्र श्रुतमयीमधिकृत्याह—शब्दात्प्रतिपत्तेरुत्पत्तेः पुनस्तत्राऽव्यापारात् । न श्रुतमयी विधेया । शब्दाद्विधेयमवगम्यते उत्तरकाला प्रवृत्तिर्विधिप्रयोजनं न पुन. शब्दाऽवबोध एव, आत्माश्रयदोषप्रसङ्गादिति भावः । कर्मफलसंबन्धबोधवत् यथा कर्मविधिवाक्यं न कर्मफलसंबन्धबोधे विधीतरमपेक्षते तथोपनिषदो ऽपि नाऽऽत्मबोधे इत्यर्थः । शङ्कते—निश्चय आत्मनि । विधेः फलं विकल्प्य दूषयति—यदि शब्दात् सजात एवाऽन्यतश्चेत् प्रमाणान्तरात् तत्सापेक्षतया ऽप्रामाण्यं शब्दस्य । अथ विधिं विना वेदान्तानां शब्दस्वरूपपरता स्यात् स्वरूपप्राथम्यात् । यदा तु वेदान्तैरात्मा ज्ञातव्य इति विधीयते तदा तैर्नाऽविवक्षितार्थैःवाक्यमात्मज्ञानं कर्तुमिति विवक्षिताऽर्थसिद्ध्यर्थमर्थ्यते विधिरित्याह—अर्थपरता ऽपि न विधेः प्रयोजनम् । कुतः ? दृष्टार्थत्वात् स्वाध्या-

---

१ सर्वाधि कर्तव्यताभेदवन्ति = पु पा ।

शिष्टस्तु वाक्यार्थ इति न्यायात् । अन्यथा सविधिकस्यैव-विवक्षितार्थत्वप्रसङ्गात् । न च पुरुषार्थत्वाय विधिः प्रार्थ्यते । ज्ञानस्य ज्ञेयाऽभिव्यक्तिफलत्वात्फलान्तराऽनभ्युपगमात् क्रियापरत्वाच्च विधेर्वस्तुस्वरूपसत्ताया अविवक्षित-

याऽध्ययनविधेः । उपनिषदां कर्मविधिवत् । 'अविशिष्टस्तु वाक्यार्थ' इति न्यायात् । प्रयोजनवदर्थाऽवबोधनं हि दृष्टं प्रयोजनमध्ययनविधेः । अक्षरग्रहणार्थत्वे त्वदृष्टार्थता स्यात् । यथा कर्मविधीनां विनैव विध्यन्तरेणार्थपरत्वमौत्सर्गिकमेवं वेदान्तानामपीत्यर्थः । यदि पुनर्न स्वाध्यायविधिर्दृष्टार्थो यदि वा नौत्सर्गिकमर्थपरत्वं वचसां तत्र सविधिकमेवाऽविवक्षितार्थं स्यादित्याह—अन्यथा सविधिकस्यैव विवक्षितार्थत्वप्रसङ्गात् । यद्युच्येत विध्यभावे हि धात्वर्थ एव भावनाभाव्यः, समानपदोपादानत्वात् भवेद्विधौ सति तदतिक्रमेणाऽसमानपदोपादानोऽप्यर्थवादिकोऽप्यपुनरावृत्तिरूपः पुरुषार्थो लभ्यत इति विधिः प्रार्थ्यत इत्यत आह—न च पुरुषार्थत्वाय विधिः प्रार्थ्यत इति । कुतः ? ज्ञानस्य ज्ञेयाऽभिव्यक्तिफलत्वात् । तस्य च तन्नान्तरीयकतया विधिमन्तरेणापि प्राप्तत्वात् । नन्वपुनरावृत्तिः फलं, श्रूयते हि वचनं 'न स पुनरावर्तते' इति, न चाऽसौ विधिं विना शक्या प्रतिपत्तुमित्यत आह—फलान्तराऽनभ्युपगमात् । अपुनरावृत्तिरिति हि मोक्ष उच्यते । न चाऽसौ साध्य इति वक्ष्यते । अपि च प्रतिपत्तिविधिपरत्वे वेदान्तानां ब्रह्मस्वरूपसत्तायामप्रामाण्यप्रसङ्गः । न ह्यसौ विधिनाऽपि तद्विषयो नित्यत्वात्, येन विधिरपेक्ष्येत । प्रतिपत्तिविषयो हि विधिः प्रतिपत्तिविषयमात्मतत्त्वमपेक्षते । तथा च तथात्मशब्दः प्रमाणमिति चेत् । न । आत्मतत्त्वमन्तरेण समारोपेणापि प्रतिपत्तेरुपपत्तेः । एवं

**स्वात्मप्रतिपत्त्यर्थमनुष्ठानं गम्येत नात्मतत्त्वाऽवबोधः स्यात्। अतः श्रूयमाणा विधिरेवंजातीयेष्वविवक्षितः। नित्यप्राप्तेः।**

**ननु विधिरहितस्याऽनुवादरूपस्य साकाङ्क्षस्य प्रामाण्यमलभ्यम्। अथ केयमनुवादता? प्रमाणान्तराऽधिगतार्थता, आहो स्विद्भूतार्थता? प्रमाणान्तराऽधिगतार्थता चेद्विधिशून्यमप्यतादृशमप्यपौरुषेयं नाऽनुवादः। भूता-**

च तत्परत्वेऽभावाद्वेदान्तानां ब्रह्मविद्यात्वं प्रसिद्धं बाध्यतेत्यत आह—क्रियापरत्वात्तु विधेस्तत्स्वरूपप्रतिपत्तौ अविवक्षितत्वात् तत्प्रतिपत्त्यर्थमनुष्ठानं गम्येत नात्मतत्त्वाऽवबोधः स्यात्। तत्त्वात्मा ज्ञातव्य इति श्रुतिरस्ति, न चासौ प्रमादः। तुल्यं हि साम्प्रदायिकम्, तदेकवाक्यता च वेदान्तानां, यतो नियोगजननया नाऽवस्थानमर्हतीत्येतदुपसंहारव्याजेन निराकरोति—अतः श्रूयमाणो विधिरेवंजातीयकेषु विधानाऽर्हेष्वविवक्षितः, नित्यप्राप्तत्वात्। सिद्धा हि वेदान्तेभ्यो विधिं विनापि ब्रह्मस्वरूपप्रतिपत्तिः। न ह्यस्य सम्भवो विदितरूपसङ्गतिः शाब्दन्यायविद्वेदान्तेभ्योऽर्थं न प्रतिपद्यत इति प्राप्तत्वादेवंजातीयकेषु श्रूयमाणो विधिरविवक्षितः। न च प्रमादोऽनुवादतोऽप्युपपत्तेः। ननु मा भूत्प्रतिपत्तिविधिफलं, प्रामाण्यायैव तु विधिराश्रयिष्यते, अन्यथा तदयोगादिति चोदयति—ननु विधिरहितस्याऽनुवादस्वरूपस्य तत एव साकाङ्क्षस्य प्रामाण्यमलभ्यं, अनपेक्षलक्षणत्वात्तस्याऽन्यथा स्मृतेरपि अप्रामाण्यप्रसङ्गात्। तदेतद्विकल्पयति—अथ केयमनुवादता? प्रमाणान्तराऽधिगतार्थता ऽऽहो स्विद्भूतार्थता? दूषयति—प्रमाणान्तराऽधिगतार्थता चेत्। विधिशून्यमपि तर्हि भूतार्थमतादृशं प्रमाणान्तराविषयीकृतार्थमपौरुषेयं नाऽनुवादः। ज्ञानपूर्वको हि पश्चाद्वादोऽनुवादः। अपौ-

थेता चेत् कुतः सापेक्षता ? यदि लौकिकवचसां प्रमा-
णान्तराऽधिगतगोचरत्वाद्भूतार्थानां सापेक्षत्वं दृष्टम्
औषधपानादिषु, विधयो ऽपि लौकिकास्तथेति विधिमत्त-
द्व्यपेक्षेत । अथाऽपौरुषेयत्वान्नाऽपेक्षते ततो ऽपौरुषेय-
त्वमितरत्राप्यपार्थम् । अथ प्रमाणान्तरसंभवाद्भूतार्थस्य
साऽपेक्षता, न विधिमतः । विध्यर्थे तदसंभवाल्लौकिकस्यापि
तदनपेक्षताप्रसङ्गः ।

कृत्ये तु धातु कर्तुभावान्न चानुपूर्वक इति नाऽनुवादः । सापेक्षते-
नेत्यनुषज्यते । पौरुषेयं हि वचः प्रमाणान्तरेणार्थं प्रतीत्य निर्मी-
यमाणं प्रमाणान्तरापेक्षं स्यान्न त्वेवमपौरुषेयमित्यर्थः । द्वितीय-
पक्षमाशङ्क्याह भूतार्थता चेत्किंकृता सापेक्षता ? भूतार्थत्वसापेक्षत्व-
योर्न प्रतिबन्धोऽस्ति कश्चिदित्यर्थः ।

शङ्कते - यदि लौकिकवचसां प्रमाणान्तराऽधिगतगोचरत्वाद्भू-
तार्थानां सापेक्षत्वं दृष्टमिति वैदिकान्यपि भूतार्थानि सापेक्षाणि ।
तथेतरम् - औषधपानादिषु विधयो लौकिकास्तथा साऽपेक्षा इति
विधिमद्वैदिकमपेक्षेत अथ विधिमद्वैदिकमपौरुषेयत्वान्नाऽपेक्षते ततो
ऽपौरुषेयत्वमितरत्रापि वैदिकभूतार्थे ऽप्यपार्थमिति । अथ प्रमाणा-
न्तरसंभवाद्भूतार्थस्य वैदिकस्य सापेक्षता न विधिमतः । कुतः ?
विध्यर्थे तदसंभवात् । प्रमाणान्तरासंभवात् । उत्तरं लौकिकस्या-
प्यौषधादिविधेस्तदनपेक्षत्वप्रसङ्गः । यदि मन्येत शब्दानामौत्सर्गिकी
नियोगार्थता तदर्थस्वार्थता वा । तन्न । तदर्थस्वार्थानि द्रव्यगुणकर्म-
वचनानि न स्वार्थे केवलमेव नियोगेन घटयितुमीशत इति विनियो-
गमन्तराश्रयन्ते । सोऽयमजहत्क्रियाकारकसंसर्ग यथासमर्थस्य नियोग-
सबन्ध इति वैदिकी स्थितिः । उत्सर्गस्याऽनपोदितस्य[१] तावदवस्थानात्
अतो पौरुषेये नियोगविनियोगयोरबुद्धिपूर्वकत्वादनपेक्षत्वं शब्दस्य ।

१ अनपोदितस्य. १ पु. पा. ।

पुरुषबुद्धिप्रभवत्वाद्विनियोगस्य तत्सापेक्षतया तत्र सापेक्षत्वम् अपौरुषेये वचसि। सोऽपि न केवलं बुद्ध्यन्तरनिरपेक्षः, मानान्तरविषयोऽपि। तदपौरुषेयवचननिमित्तोऽनपेक्ष इति यतोऽसावनपेक्षत्वकारणं न मानान्तरासम्भवः। पौरुषेयता च सापेक्षत्वे हेतुः। नियोगनिष्ठेऽपि लौकिके वचसि सापेक्षत्वान्न प्रमाणान्तरसंभवः। तथा च लोकस्तु प्रमाणेनावगम्य स्वयमन्येनोपलब्धं[1] वा समारोप्य वचनानि रचयति। यथा '[illegible], पञ्चमर्णी[illegible]' 'इमौ मासौ नैतस्य [illegible] भाव्ये' इति। न च नियोगः प्रमाणान्तरविषयः समारोपविषयो वा, ऽन्यत्रानुपलब्धेः। तद्बुद्धयस्तु विनियोगः प्रमाणान्तरगोचरः समारोपगोचरो वा सम्भवति। यथोपलम्भनं च विवक्षन्, यथाविवक्षितं वचनान्यभिव्यनक्ति नियोगपरं तमपहाय लक्षणया विनियोगपरतामवकल्पयति, पौरुषेयं च वचनं सापेक्षमिति दर्शयति पुरुषबुद्धिप्रभवत्वात्तु विनियोगस्य सापेक्षतया तत्र सापेक्षत्वम्। अपौरुषेये तु सोऽपि विनियोगोऽपि न केवलं नियोगबुद्ध्यन्तरनिरपेक्षः। पुरुषबुद्धिप्रभवत्वं चाऽपौरुषवाक्ये विनियोगस्य हेयतया ऽनाप्तवाक्ये चाऽऽरोपिततया ऽयुक्तम्। परिहरति—मानान्तरविषयोऽपि भूतरूपोऽर्थो नियोग इवापि स्वयचननिमित्तो [illegible]। यतो पौरुषेयता ऽनपेक्षत्वकारणं न मानान्तरासम्भवः। पौरुषेयता च सापेक्षत्वे हेतुः। अन्वयव्यतिरेकौ दर्शयति—नियोगनिष्ठेऽपि लोकवचसि सापेक्षत्वात्। अयमर्थः। यदि न लौकिकं वचनं नियोगनिष्ठं भवेत् ततो वैदिकमपि न स्यात्, लोकावगतसम्बन्धस्य शब्दस्य वेदेऽपि बोधकत्वात्। अगृहीतसम्बन्धस्य तु बोधकत्वे प्रथमश्राविणोऽप्यर्थप्रत्ययः प्रसज्येत। तस्माद्यद्यपि परेषां राद्धान्ते न नियोगनिष्ठानि[2] पौरुषेयाणां वचसामपि तु विनियोगप्रधानता तथाप्यापाद्य नियोगनिष्ठत्वमेतदुक्तमिति मन्तव्यम्।

१ अर्थमुपलभ्य ग पु पा। १ नैरर्थ्येन ग पु पा।

**सापेक्षत्वे प्रत्यक्षाऽनुमानयोः परस्परविषयसंभवात्सापेक्षत्वात्प्रमाणत्वहानिः । अतः प्रमाणान्तरोपलब्धविवक्षापुरःसरप्रवृत्तित्वाद्विधिवदितरत्त्वाप्तवचनं सापेक्षम्, अन्यथाभावे वैदिकमुभयमप्यनपेक्षमिति चतुरस्रम् । तेन प्रमाणत्वार्थमपि न विधिविवक्षा ।**

न प्रमाणान्तरसम्भवः सापेक्षत्वे हेतुः । सत्यपि तस्मिन् वैदिकस्य विनियोगस्यानपेक्षत्वात् । अत एव प्रसङ्गान्तरमाह—तथा च सापेक्षत्वे प्रत्यक्षानुमानयोः परस्परस्य विषयसम्भवात्सापेक्षत्वात् प्रमाणत्वहानिः । मतमुपसंहरति—अतः प्रमाणान्तरोपलब्धविवक्षापुरःसरप्रवृत्तित्वाद्विधिवदितरत् पुरुषवचः सापेक्षम् । अन्यथाभावात्तु वैदिकमुभयमप्यनपेक्षमिति चतुरस्रम् । प्रकृतमुपसंहरति—तेन प्रमाणत्वार्थमपि न विधिविवक्षा ।

कश्चिदाह सत्यमपौरुषेयत्वादनपेक्षता, तदेव तु प्रमाणान्तराऽगोचरार्थतया सिध्यति । न खल्वनतिशय्य बुद्धावर्थं तत्प्रत्यायनाय वचनं रचयन्ति लौकिकाः । न च प्रमाणान्तराऽगोचरोऽर्थः शक्यो बुद्धावतिशयितुम् । औत्सर्गिकी च नियोगपरता शब्दानां, नेयमसत्यपवादे शक्या निह्नोतुम् । आम्नाये नियोगश्च प्रमाणान्तराऽगोचरः शब्दैकसमधिगम्य इति तदर्थत्वादपौरुषेयताऽऽम्नायस्य । पौरुषेयत्वे हि मुख्या नियोगार्थता हीयेत । अत एव वाक्यत्वादयोऽप्यागमबाधितविषया नाम्नायस्य पौरुषेयतां साधयितुमीशते । ततश्चाऽनपेक्षता । न चेयं विधा 'ज्वरितः पथ्यमश्नीया'दित्यादिषु सम्भवति, स्पष्टदृष्टेन पौरुषेयत्वेन मुख्यमपि नियोगार्थत्वमपोद्य लक्षणया विनियोगपरत्वाऽऽपादनात् । यदि पुनराम्नायस्य भूतार्थता भवेत्तदा तस्य प्रमाणान्तरयोग्यतया शक्यवचनत्वेन पौरुषेयता दुर्वारा भवेदिति प्रयत्नेन भूतार्थतामपनीय कार्यपरत्वमाम्नायस्य व्युत्पाद्यत इति ।

**नन्वन्यदेवेदं शब्दप्रभवादात्मतत्त्वगोचरं ज्ञानं विधीयते । न हि शाब्दज्ञानपरिवेद्यं ब्रह्मस्वरूपम् । वाक्यलक्षणो हि शब्दः प्रमाणं, पदार्थसंसर्गात्मा च तदर्थः, प्रत्यस्तमिताऽखिलभेदप्रपञ्चं चात्मतत्त्वं, तत्कथमस्य गोचरः ? तस्मात्प्रलीनसकलाऽवच्छेदाल्लेख्यमद्वैततत्त्वाऽवभासात्मकं ज्ञानमन्यदेव शाब्दाद्विधीयते ।**

तदनुपपन्नम् । सिध्यदयम मनोरथो यदि तथाविधो विधिराम्नायगोचरः स्यात्, न त्वयं तद्गोचरः सम्भवतीत्युपपादितं नियोगगोष्ठ्याम् । अपि चाऽयमौपनिषदोऽपि पुरुषो न प्रमाणान्तरगोचर इति कथमुपनिषदामपि पौरुषेयता दुर्वारा ? तथाविधस्यान्यस्य सिद्धरूपस्य प्रमाणान्तरगोचरत्वमुपलब्धमित्यस्यापि सिद्धतया तदर्थत्व[1]मिति चेत् । एवं तर्हि क्रियात्मनः कार्यस्य मानान्तरगोचरतेति कार्यतया नियोगस्यापि तदर्थत्वमिति तदर्थस्यापि वेदस्य पौरुषेयता दुर्वारा भवेत् । स्वरूपेण वा तस्य प्रमाणान्तराऽगोचरत्वे औपनिषदस्याऽऽत्मनोऽपि तदिति सर्वं समानमन्यत्राभिनिवेशात् । तदास्तां तावत् ।

एवं तावन्न श्रुतमयी प्रतिपत्तिर्विधानस्येत्युक्तम् । ननु मा नामेयं विधायि, साक्षात्कारवती तु विधायिष्यते इति चोदयति—नन्वन्यदेवेदं शब्दप्रभवाद्विज्ञानादात्मतत्त्वगोचरं ज्ञानं विधीयते । कस्मात्पुनरात्मतत्त्वगोचरत्वं न शाब्दस्येत्यत आह— न हि शाब्दज्ञानपरिवेद्यं ब्रह्मस्वरूपं, वाक्यलक्षणो हि शब्दः प्रमाणं, पद-मात्रस्याऽप्रमाणत्वात् । तथापि कि ? मित्याह—पदार्थसंसर्गात्मा च तदर्थः, संसर्गश्च संसृज्यमानाऽनेकार्थतन्त्रत्वादेकोऽपि नानात्वदूषितः । न चाऽऽत्मतत्त्वमेवंभूतमित्याह—प्रत्यस्तमिताऽखिलभेदप्रपञ्चं चात्मतत्त्वं, तत्कथमस्य गोचरः ? उपसंहरति—तस्मात्प्रलीनस-

१ कार्यस्य मू पु ।

